# प्रतिपद्

अध्यापकः

विद्वन्मणिः केशवचन्द्र दाशः

प्रकाशिका—

लोकभाषा प्रचार समितिः

श्री रामकृष्णानन्द वेदान्तभवनम्

पुरी, ओडिशा

प्रणेता—
विद्वन्मणिः केशवचन्द्र दाशः
प्राध्यापकः
श्री जगन्नाथ संस्कृत विश्वविद्यालयः
पुरी - ७५२००१

प्रकाशिका—
लोकभाषा प्रचार समितिः,
पुरी, ओडिशा

प्रथम संस्करणम्—
१९८४

मूल्यम्—
रू ५/- (पञ्चरूप्यकाणि)

मुद्रकः—
श्री नारायण प्रेस
बालिसाहि, पुरी

प्राप्तिस्थानम्—
प्रकाशन संयोजकः
लोकभाषा प्रचार समितिः
ओडिआ मठ, पुरी (७५२००१)

# प्रतिपद्

समर्पितम्

'त्वयि'

विनीतः

**केशवचन्द्रः**

# प्रतिपद्

क्षीणतोया नदी। विस्तीर्णा वालुका। तस्मिन् एकः मार्गः। तत्र च एकः द्रुमः। तम् अभिलक्ष्य आगच्छति उद्धवः। करे जलधानी। मनसि प्रश्नः— वालुकायां द्रुमः? अणुमयी वालुका। बद्धायमाना अपि असंबद्धा। तत्र पुनः उत्पत्तिः? उत्पत्तिः सुन्दरी अपि? अहो, संस्कारशीलता! महाप्रवाहे प्लवमानः अणीयान् वीजः अत्र विरम्य स्थितिमान् संजातः। महास्रोतसः उपादानमादाय तदनु जङ्गमः। अहो, महतीयं पृथिवी! स्वेच्छया एतावत् उत्पादयति। पुनः लाङ्गलमात्रकर्षणे किं वा नोत्पादयति? अधिककर्षणे किं वा नोत्पादयिष्यति? किं वा नाऽस्मिन् वर्तते? नूनम्, इयं रत्नगर्भा।

सहसा द्रुमे अनपेक्षितं क्षतं विलोक्य व्यथितोऽभूत् उद्धवः— अहो, कर्तव्यमूढता ...? नूनमद्य सर्वत्र अविश्वासः। एतदर्थं शङ्का-विभीषा-उद्वेगः। जनश्च केवल कैन्द्रिकः। अतः सदा आपद्भावना। कर्माकर्म न जानाति। कर्तव्यं च केवलं वैपणीकता ... यत्र कुत्रापि स्वादुचोष्यता। एतदर्थं सर्वत्र नैराश्यम्। सः निर्लक्ष्यः। अतः स्थितिकिंकरः—

दिवसः उदासः । वृक्षोपरि शीर्णवायसः धीरं विरौति । लघुपक्षिणां काकलिः अभ्यासमन्थरः । उद्धवः जलं निगालयति वृक्षमूले । चिन्तयति, वृद्धा जननी तु रुग्णा । कियच्चिरं वा जीविष्यति ? तथापि एषु वृक्षेषु तस्या अनवद्यः स्नेहः । जलपानसमयेऽपि पात्रात् प्रथमतः अर्धं वृक्षमूले निगाल्य ततः पिबति । यदि कश्चित् पृच्छति——केयं रीतिः ? किमर्थम् इत्थं करोषि ?

सा उत्तरति ।

— मम तु समयः समाप्तप्रायः । देहात् उत्तापः स्खलति । नेत्रतः प्रकाशः गलति । वयसि अस्मिन् तु उष्मता अपेक्षते एव । कुतः आयास्यति ? सर्वं तु यास्यति । यदि पुनः अस्य मूले जलं निगाल्येत अन्ततः अयम् अस्माभिः सह ज्वलिष्यति । न कोऽपि सहयास्यति । अयम् अस्माभिः सहैव भस्मसात् भविष्यति ।

वृद्धपिताऽपि तादृशः । निजभोजनात् अर्धं काकेभ्यः कुक्कुरेभ्यश्च वितरति । कस्यापि वचनं न शृणोति । अयं हि तस्य संतोषः । तस्य कुटुम्ब कल्पनायां इयमपि एका दिशा । उद्धवः यदा विरज्यते तदा पिता बोधयति ।

— अहम् अधुना न सामाजिकः । परमेकः निरुपाधिकः जीवः । कालस्य महाप्रवाहे कियत्क्षणकृते मनुष्यः आत्मानम् उपाधिमान् इति मनुते । कतिपयक्षणेषु सः स्वयं संकुच्यते । निजसंकोचे च आनन्दमनुभवति । अद्य तस्य मोहसंकुलसमयस्य गुरुत्वं नानुभवामि । अहं तु प्रवाहजीवी ।

उद्धवः किमपि बोद्धुं न प्रभवति । वृद्धपित्रोः सेवार्थं सः अद्यत्वे वाध्यव्रती । प्रभातनयने यदा वायसः कज्जलं भरति तदैव उद्धवः सेवामारभते । सेवायाः समाप्तिः नास्ति । सर्वदा उभयमुखे 'उद्धव' एव मन्त्रः ।

पितुः सम्बोधनं निशम्य उद्धवः गृहं प्राविशत् । गृहे शीर्णपिता शय्याशायी । शरीरे न कुत्रापि आन्दोलनं लक्ष्यते । तथापि नग्नपिता उद्धवं विलोक्य वसनखण्डं निजोपरि अपातयत् । पूर्ववत् उद्धवः विकारशून्यः । प्रतिक्रियाविहीनः । तथापि उद्धवः सादरं तद्दिने अपृच्छत् ।

—पितः ! किमर्थमयं संकोचः ?

—नहि । नायं संकोचः । सत्यापह्नुतये अयम् एकविधः यत्नः । सत्यस्य अपह्नुतिः जीवस्य आदिरतिः । अद्य अहं शरीरस्य एकभागं वसनेन आवृणोमि । परं समयः आयास्यति, तदा त्वं समग्रशरीरं मे आच्छादयिष्यसि ।

उपरि आकाशः । तले वसुमती । उभयमध्ये उद्धवस्य स्थितिः । उभयत आकर्षणम् । आकर्षणेऽस्मिन् तस्य जीवनलिप्सा श्रीमयी । तस्य महाभावीयसत्ता एतदर्थमेव रूपवती । यत्र आकर्षणं नास्ति तत्र जीवसत्ता नास्ति । तत्र केवलं वहनशीलः जीवनमयो भावः अनादिः··· अनन्तः । तत्र केवलं स्पन्दिष्णुविन्दुः··· विन्दुघूर्णिः··· विन्दुविभूतिः··· ।

'पितृ'-'मातृ'-शब्दद्वयस्य आकर्षणे पुत्रपदार्थः कियान्न नमनीयः ? कियान्न स्नेहस्पर्शी ? 'पुत्र' इति सम्बोधनं विरलम् ।

परं पितः !, मातः ! इति सम्बोधनं पुष्कलम् । सम्बोधनमयी आवृत्तिः मन्त्रान् सृजति । आवृत्त्या पुनरावृत्त्या च नाम मन्त्रः संजायते । ततः यावदावृत्तिः तावत् मन्त्रस्य प्रभावशीलता । अतः पितुः समीपे उद्धवशब्दः मन्त्रः । उद्धवनिकटे पितः ! मातः ! इति शब्दः महामन्त्रः ।

उद्धवमनसि विकल्पः— उद्धव इति शब्देन किं चकास्ति अनयोः चरमे चेतसि ? अनयोः स्वरूपे विकृतिः । मुखे जुगुप्सा-संकेतः । नयने अस्वस्तिबोधः । स्वरे असहायता । रिक्तहृदये तिक्तलेपः । अस्वस्थमनसि असान्द्रनादः । सर्वाङ्गे जीवनीस्पन्दः मन्द्रः । जनकजननीविकर्षणतरङ्गे उद्धवस्तु स्पन्दमयः अधिनाद एव ।

परं जरज्जीवं संसेव्य सः किं प्राप्नोति ? अथ च सदा व्याकुलः-पर्युत्सुकः-व्यग्रः ? किमर्थम् ? संक्षिप्तसमयसीमा जीवनस्य नामान्तरम् । एतन्निमित्तम् उद्धवस्य सृष्टिः । स्वयम् उद्धवः अस्य शब्दस्य आधिश्रयः । उद्धवपदार्थस्तु करुणमरणस्य अणीयान् अवस्तारः । पदार्थः स्वस्थानं प्रस्थास्यति सूक्ष्मतत्त्वरूपेण । उद्धवस्तु तरङ्गरूपमादाय स्पन्दघूर्णिषु पुनरुत्पत्तुं नादबीजो भविष्यति । तथापि उद्धवः किं प्राप्स्यति ? संतोषः, आत्मप्रसादः, आश्वस्तिबोधः— एषु एव तस्य अधुना पर्याप्तिः । अनन्तरं तस्य प्राणप्रणवः तदर्थं मनाक् नादाणुं संचेष्यति । तदेव तस्य द्वितीयजीवनी ... अद्वैतविरहरूपा .. नवीयसी अदृष्टरुचिः ... प्रत्नरोचिषा रोचिष्मती निजायनी । ततः उपलब्धिः—

उद्धवीयनादाणुः केवलम् अविभागैकान्तः ... निषादमयः महाप्रणयः । तत्र उपनिषदीयः प्रायोवादः समाप्तः । नेति नेति पद्यावली अथर्वधौता ।

—उद्धव ... ! उद्धव ... !

पुनरेकं परिचितसम्बोधनम् । पुनरेकम् आकर्षणम् । उद्धवः प्रकृतिस्थः सन् चिन्तयति । स्वरोऽयं मानायाः । माना ... ? नूनम्... इयं माना । मानायाः आकर्षणमपि अद्यत्वे नाल्पम् । आकर्षणेऽस्मिन् आनन्दस्य परिमाणम् अधिकतरम् । स्वयं स आकृष्टः ? अथवा माना आकृष्टा ? किमत्र कारणम् ? माना प्रतिवेशिकन्या । उद्धवगृहे तस्या बाल्यकेलिः प्रारब्धा । तदेव गृहम् अद्यापि तस्याः केलिनीडम् । बालक उद्धवः अद्यापि तन्निकटे स एव पुराणपुरुषः । आकृतिः परिवर्तिता । व्यवहारो भिन्नः संजातः । वयोऽपि उन्नतम् । स्नेहधारासु केवलं नाम तथैव वर्तते । उद्धवस्तु अनवद्यमनुभवति । अद्यत्वे मानाम् अवलोक्य तस्मिन् आदिरागः मूर्च्छनामन्वेषयति । आदिनादः प्रसारमिच्छति । स्थिरसरसी तरङ्गं कामयते । तापः प्रतितापम् अभिलषति । सर्वत्र लघुनादस्य विराट् स्वप्नाली ।

— उद्धव ... ! उद्धव ... !

माना उपगता । मुखे स्मितमाधुरी । अधरे सा एव आदिश्रद्धा । सर्वाङ्गे तदेव बाल्यचापल्यम् । स एव अभिन्नव्यवहारः । परं सा मनसा असंयता आसीत् । शब्दाः तस्या विधिबद्धा नासन् । अतः किमपि निश्चितवचनं वक्तुं न समर्था अभूत् । केवलम् उपवनाय उद्धवं

निरदिशत् । उपवने दूराद् दृश्यन्ते कतिवृक्षाः वृत्तवद्धाः । कति च ऊर्ध्वं सरलायन्ते । कति पुनः भूमौ अनुस्वारायन्ते । व्याप्तिमत्स्थिति-कल्पनासु ऊर्ध्वंगमजीवनचर्यासु च उपवनमिदम् अनुस्वारमयम् । उद्धवस्य जीवनी एव उपवनस्य जीवनी ।

माना अभाषत ।

—बन्धनमुच्छिद्य गावः उपवनमिदं विरुजन्ति । पुनश्च कति असहमाना अगोचरे फलानि पुष्पाणि च चोरयन्ति । तेऽपि इदं नाशयिष्यन्ति ।

खिन्न उद्धवः मनाक् विपर्यस्तः संजातः।उपवने तस्य महान् आदरः । वृक्षेषु च महती श्रद्धा । तदर्थं वृक्षाणां क्षतिषु उद्धवः यन्त्रणाम् अनुभवति ।

सः क्रुद्धः । किमर्थं क्रुद्ध इति आत्मानम् अपृच्छत् । वृक्षस्यापि आकर्षणं विद्यते । आकर्षणमिदं उद्धववीजाक्षरीयम् । एतदर्थं सः अद्यावधि बालकीयकेलिविन्दुषु, लालित्यमाहरति । पिता, माता, माना, उपवनम्—एतेषाम् आकर्षणेषु उद्धवः प्रकीर्णसंसारी ।

उद्धवः उपवनम् अपश्यत् । उपवनस्य शीतार्तकाकलिः तस्य कण्ठम् अवारुणत् । द्रुमेषु नवक्षतानि विलोक्य स नितराम् अखिद्यत् । पादपोऽयं कुसुमानि ददाति । फलानि उपहरति । छायामपि प्रसारयति । तथापि जनो न संतुष्यति ?

—उद्धव ... ! उद्धव... !

अनुसरन्ती माना उपस्थिता ।

—किमर्थं व्यथसे ? वृक्षान् आरोपयितुं जानासि । तेषां रक्षणाय उपायो न ज्ञातः ।

—त्वमपि उपवनम् उपभोक्तुमागच्छसि । अतः त्वयापि उपायो विधातव्यो नु ?

—मया चिन्तितम् ।

—किम् ?

— इतः प्रभृति अत्र त्वया शिक्षायनमेकं प्रारब्धव्यम् ।

—ततः किम् ?

—ततो ये विद्यार्थिन आगमिष्यन्ति ते अध्येष्यन्ति । निर्देशानुसारम् उपवनकर्माणि अपि करिष्यन्ति । अनेन तवापि मङ्गलम् । आरोपितानां परयत्नश्च सम्यक् स्यात् । उपवनम् अधिकतरम् उपभोग्यं स्यात् ।

साधूपायः चिन्तितः । आम्राश्च सिक्ताः पितरोऽपि प्रीणिताः ... ।

युगपत् उभौ अहसताम् ।

मनसि हृदये च कवोष्णवह्निः । सर्वतः शीतोष्णमावाहनम् । माता स्वयं वनस्पतिमयी गुल्मजीवनी । सा न जानाति, किमर्थम् उपवनेऽस्मिन् तस्या आदरः अनुदिनं वर्धते ? किमर्थं च इदमेव तस्याः सर्वाङ्गे आग्निकणान् सृजति ?

वह्निरयं पावको वा दाहको वा ? सा यदा उद्धवस्य मुखमनुस्मरति तदा अनुभवति वह्निरयं पावकः ... संस्कारशीलः । यदा



देहमनुचिन्त्य स्पर्शातुरा भवति तदा अनुभवति वह्निः दाहकः ... सर्व-

ग्रासी। मानाया ग्रनुरागे केवलमुद्धवस्य मुखं विभापथमायाति। तस्य दुर्बलदेहे माना ग्रात्मरूपं द्रष्टुं न शक्नोति। एतदर्थं सा खिन्ना। ग्रात्मानं च सान्त्वयति— तत्त्वदर्शिनः तु दुर्बलशरीरा भवन्ति।

तस्याः चतुर्पार्श्वे ग्रद्य ग्रजस्रशब्दलयः। ग्रन्तर्मथ्यते च स्पन्दिष्णु-ध्रुपदम्। कतिपुलकावर्तेषु माना मथ्यते। ततः शीतलनिश्वासः सत्यमुपस्थापयति। सा ग्राविष्करोति, चन्द्रः निरुष्णः। वनानी हिमकल्लोलिनी। ग्राकाशः विकस्वरः, युवा ऋषिः कङ्कालसारः।

उद्धवस्य ग्राग्रहेऽपि माना ग्रस्फुटनेत्रमर्मणः ... एका च ग्राकर्षणघूर्णिः ... ग्रवनी सा ग्रौपवनी। पित्रोः ग्रन्तराले तदर्थं माना एका निष्प्रत्यया प्रकृतिः ... एका ग्रवाच्या लज्जावाक्।

संध्या परिमलवैष्णवी।

ग्रासीना माना चिन्तयन्ति—यदीदानीं वातायनम् उन्मोच्येत तर्हि उद्धवस्य उपवनं दृश्यते। उपवनस्य सीमन्तोन्नयने च परागवती पृथिवी लक्ष्येत। ततः तस्याः कक्षबद्धाकेलिः मनश्चारिणी स्यात्। ततः परिमलभ्रमिषु पुष्पाणुः नोदनमाहत्य परिणामायेत।

सा सपदि प्रकृतिस्था ग्रभूत्। तस्या नेत्रपथमागता एका सायं-कृष्णा कपोती। शाखामवलम्ब्य नीडनिकटे उपविष्टा। तस्याः काकुस्थ-काकलिः केवलं कण्ठस्थप्रणवः। ग्रात्मनि वासरीया क्लान्तिः। तथापि तामसी प्रतीक्षा तस्याः सान्ध्यपूजा ... ग्रवगुण्ठनतले एका उत्कण्ठफलश्रुतिः।

सहसा माना पुलकिता । अनुभवे तस्या नक्षत्रस्य अभिकर्षः । स्वरूपे उद्भूतप्रसादः । व्यवहारे सायुज्यचापल्यम् । सम्मुखे प्रसन्न सामीप्यम् ।

उद्धवः समागतः ।

माना गम्भीरा अभूत् । सत्वरम् आतिथेयीं सपर्यां पुरस्कृतवती । पादोदकम्, आसनम्, उपाहारं च सज्जीकृत्य तम् अन्वनयत् । यदा उद्धव उपविष्टः सा सादरमपृच्छत् ।

—कः समाचारः ?

उद्धवः नेत्रमुत्थाप्य मानां निरैक्षत — पङ्किलसरोवरे निष्पिष्टा कमलिनी आत्मलुप्तिं कामयते । मुखमण्डले तथापि दैन्यचर्या द्राघीयसी। स्मिततले ग्लानिः वर्षीयसी । उद्धवः सहानुभूतिशीलः संजातः ।

—शुभम्...कुशलम्... ।

—असमये आगमनस्य किमपि विशेषकारणमस्ति ?

— अस्त्येव ।

—किम् ?

—त्वया तु अनुप्रेरितः अहम् ।

—कस्मिन् विषये ?

—उपवने विद्यायनं प्रारब्धव्यं...खलु ?

—अनेन समयसद्यापः ।

—जानामि ।

—तर्हि... ?

—श्वः प्रारप्स्यते इति ज्ञापयितुमागतः ।

—एतदर्थम् इयान् श्रमः ?

—का हानिः ?

—गृहे पित्रोः का अव्यवस्था...

—नहि । ते प्रसन्नाः । अयं समुचितावसर इति अहं प्रस्थितः ।

—विषयेऽस्मिन् किमुभौ सहमतौ ?

—तेषां आपत्तिः नास्ति ।

—तर्हि, शुभस्य शीघ्रम् आरम्भः...

—अवश्यं कर्तव्यः ।

—मामपि शिष्यत्वेन...

—नहि, अतिथित्वेन । परं ते पुत्रं शिष्यत्वेन स्वीकरिष्यामि

माता मनाक् शङ्किता । संकुचिता अपि । ततः सानन्दमहसत् ।

हसमुख उद्धवः प्रस्थितः ।

समारब्धा विद्यायनी ।

विद्यास्थानमिदम् अन्यतममाकर्षणम् उद्धवस्य । विद्यायनी... विद्यायनी... सर्वदा उद्धवमनसि सा एव नामरूपयोः मार्दवविपणी । अविकला सात्त्विकी संहिता । कालयापस्य एका व्यसनकला । अलिकस्य कलाप्रपञ्चिका । आत्मनादस्य विलासकलापिका । अश्लीलस्य निजत्व-दर्शिका । आर्जवजीविका सा नश्वरस्य विवर्तसमृद्धिः ।

उल्लासेषु' उच्छ्वासेषु, प्रकरणेषु, अध्यायेषु, आह्निकेषु च विद्यायनी क्रमशः तत्त्ववादिनो संजाता । साहस्थ्यं, सहनं, विवेचनं, सम्मुखीभवनं, संवेष्टनं, निर्णयः च विद्यास्थानस्य प्रकाश्यफलश्रुतिः उद्धवदर्शनस्य च मौलिकविभूतिः अभूत् ।

विद्यार्थिनः समवेताः । अध्यापनं प्रारब्धम् । आरोग्यं प्रथम-दिनस्य विषयः । रोगः द्वितीयदिवसस्य पाठः । निदानं तृतीयवासरस्य अध्यायः । तुरीये अहनि चिकित्सा एव विद्या । पञ्चमदिने चतुर्व्यूह-विषयिणी चर्चा । षष्ठदिवसे साक्षात्कारीया अनुभूतिः ततः अनध्याय-वासरः । अस्मिन्दिवसे केवलं प्रवचनम् ।

प्रवचने उद्धवः उपदिशति—सर्वः स्वस्मिन् स्निह्यति । त्वम्... त्वयि प्रणयी । अतः त्व महान् । परंज्ञातुं न शक्नोषि । यतः निजपूजां न करोषि । निजपूजायाम् अपूर्वा अनुभूतिः जन्यते । अनया सुप्तनिजता जागर्ति । अहंकारः अवनमति । दुर्वलता अपसरति । विश्वासो वर्धते । शान्तिः उद्भवति । अनुभूतिः शाश्वतीभवति । निजत्वं साधय । निजत्वम् अराधय । साधनारधनयोः पर्याप्तौ निजतामास्वादय ।

प्रतिदिनम् इत्थम् उद्याप्यते दिवसः ।

अद्यत्वे उद्धवमनसि प्रतिष्ठद्वयम् । पितुः मातुश्च सेवा । बाल-विद्यार्थिनां मानवीकरणम् । अतीताय प्रतिश्रुतिः । भविष्यदर्थं प्रतिज्ञा । एकत्रप्रेयः । अन्यत्र श्रेयः । उभयस्य मिश्रविन्दुषु उद्धवः मूर्तिमान् वर्तमानः —स्ययं समन्वयिकालराशिः । विनोदनिधिः सः मानायाः शिथिलकैशोरे । दैन्यतारुण्ययोः विमिश्रनेपथ्ये मानाऽपि युक्तवर्णा... चर्चामूला निर्मूलस्वनिमा । अनुरागशिञ्जिनिः सा जीवशिवयोः ।

उदस्ते गोधूलिः ।

उद्धवगृहे तीर्थप्रस्थानविषयिणी चर्चा भवति। माता तीर्थानां नामानि प्रस्तौति। पिता कति समर्थयति। कति च प्रत्याचष्टे। आत्मनः ज्ञानप्रौढिं प्रदर्शयति। किंवदन्तीम् उदाहरति। अनुभवं विशदीकरोति। स्मरणं नवीकृत्य द्रढयति। माता कतिविषयान् अज्ञात्वाऽपि जानन्तीव अभिनयति। पुराणवचनम् उद्धरति। लोककथाभिः विषयान् समर्थ्य कस्मिंस्तु स्थलेषु विवदते।

—देहो विगलितः। भवान् वृद्धः संजातः। तथापि आत्मानं बहुमन्यते? को वा पृच्छति? ... अहमेव पृच्छामि। मदुपरि पाण्डित्यम् ... ?

—उद्धवः उदरं पूरयति। मनो मे पूरयितुं त्वद्विना को वा अत्र विद्यते।

मातुः मनसि आश्वस्तिः जन्यते। सा निरीहते। चर्चागतिं वक्रयति।

— कियद्दिनम् उद्धव इत्थम् एकाकी निवत्स्यति? तस्य विवाहार्थं किमपि न चिन्तयति? भवान्।

— अवश्यं किमपि चिन्त्यम्।

—कदा ... ?

—किमधुना समयः संजातः?

—किं वा वेत्ति भवान्?

—स तु बाल इदानीम्।

—वृद्धः संजातः। अतः नयने सर्वो बालः प्रतिभाति।

—अरे ··· ! विवाहार्थं अन्तर्वयः अपेक्षते। न तु बहिर्वयः। इदानीं विवाहभारं वोढुं सः समर्थः किन्तु ?

—किमर्थं न समर्थः ?

—अपत्यजन्म एव त्वादृशानां संसारः। मादृशानां तु आत्मजनने संसारः। महान् अयं भेदः।

—भेदकल्पनां करोतु। इतः, पुत्रस्य वयः अपैति।

बहिः उद्धवः आकारितवान्।

—मातः ... ! मातः ... !

—कोऽयम् ... उद्धवः ?

—हुँ; मातः ... !

सम्बोधनमिह दीपवर्तिका। तमसि स्वरूप परिचितये एकान्त-बान्धवः। भाषायाः निर्मुख्यविशेष्यः। निरधीनमिदं मदितरकर्त्ता। नाममयमिदं त्वन्मयप्रणवः।

क्लान्त उद्धवः गृहमाविशत्।

नित्यकर्म समाप्य पुराणं श्रावयितुं यथास्थानम् आसीनः। जननी पाककर्मणि मग्नाऽपि पुराणं शृणोति। पिता नयनं निमील्य श्रवणतन्मयः। उद्धवः क्रमशः रामायणस्य समाप्तिम् उद्घोषितवान्। तदनु पिता तदुपरि टीकां व्यवस्थापयितुं प्रारब्धः।

रामायणमिदं न केवलं रामस्य अयनम्। अपितु रामायाः अयनम्। रामः वनं गच्छति। सीता च तेन सह गच्छति। रामः स्वर्गं गच्छति। सीता च पातालं गच्छति।

माता झटिति पाकाशालातो निर्गम्य अपृच्छत् ।

—सीता किमर्थं पातालमगमत् ? अवश्यं, सा पत्या साकं स्वर्ग-गामिनी अभविष्यत् ?

उद्धवः अबोधयत् ।

—मातः ... ! सर्वमिह पृथक्। पृथक् रूपेण पदार्थ उद्भवति । पृथक्तया च प्रतिष्ठते। परं प्रतिपदार्थम् एका आकर्षणशक्तिः अपरा च अभिकर्षशक्तिः विद्यते । आकर्षणबलेन सः अन्यान् आकृषति । अभिकर्षबलेन च स्वयमाकृष्यते । अनेन पदार्थद्वयं संयुज्यते। स च संयोगः अविभक्तः प्रतीयते । यदा अभिकर्षो नश्यति तदा आकर्षणमपि नश्यति । तेन यो यस्मादागतः सः तम् अभिप्रतिष्ठते। अभिप्रस्थानमेव ध्रुवमिह । सीता भूमितः उत्पन्ना, अतः भूगर्भे लीना । रामः स्वर्लोकादगतः, अतः स्वर्गमभ्यगमत् ।

पिता नेत्रम् उन्मील्य दृढमवदत् ।

—तथापि तयोः संयोगो न नष्टः । स्वर्गः न कदा पृथिवीं परित्यज्य तिष्ठति। न वा पृथिवी तथा स्थातुमर्हति । उभयोः अभिकर्षः चिरन्तनः । नश्वरो नश्यति एव । परं नश्वरस्य संस्कारः अभिकर्षतत्त्वं न जहाति । अत्र यद् अभिप्रस्थानं भवति तत् सर्वम् अभिकर्षनिमित्तमेव । अभिकर्ष एव संसारबिन्दुः ।

माता विवादमारभते ।

—निजपुत्रविषयं विचारयतु । इतस्ततो जल्पनेन किम् ... ?

—अरे ...! अधुना मम विचारे किमस्ति ? यथा उद्धवः चिन्तयति तथा भवतु।

उद्धव:, अयं समुचितसमय इति मनुते । माना विषये च मनोऽनुगुणतां वक्तुं निश्चिनोति। मानायां स: अतीव स्नेही । माना च तस्य बाल्यसखी। अद्यत्वेऽपि नितरां हिताकाङ्क्षिणी।
विरक्ता जननी पितुः वचनोपरि दृढमवदत् ।
—उद्धव: किं चिन्तयिष्यति ? संसारेऽस्मिन् या काऽपि सहचारिणी, सहधर्मिणी च भवति। परं कुत्र पत्नी ... सहधर्मिणी ... ?
—यत् त्वं वदसि तत् सर्वथा असम्भवम्।
—कुतः ? व्यवहार एव गुणदर्पणमिह।
—को वा व्यवहारमध्येतुं नारीमनुसरेत् ?
—यदि भवान् असमर्थः, तर्हि अहमेतन् निश्चेष्यामि ।

उभयस्य आलापविलासं निशम्य उद्धवः स्थाणुवत् आसीनः । पित्रोः अधिकारपरिसरे मानायाः स्थानं कुत्र इति विमृशति। मानायाः व्यवहारान् सङ्कलयति। आचरणं विचरणं च सम्यक् परामृशति । उद्धवस्य सकलविचारे माना केवलं निरूपमा प्रतिमा।

रात्रिः भोजनप्रहरोत्तरा अभवत्।

उद्धवः अन्यस्मिन् कर्मणि व्यापृतः। माना अद्य विद्यायनस्य भारप्राप्ता अध्यक्षा । मनोऽनुगुणं छात्रान् अनुशास्ति। परिवेशं दृढं नियमयति। आत्मानुरूपं च उपदिशति । उच्छृङ्खलान् प्रशास्ति । उद्धतान् दण्डयति। तस्याः कठोरशासने विद्यापरिसरः गम्भीरः। सा च स्वयं

शासनगर्भा राजधानीव निर्भीका। विद्यार्थिनस्तु भीताः। उद्धवस्य स्नेहलालितास्ते मानायाः प्रशासनं न सहन्ते। अतः तेषु विमुखता प्राणमयी।

समयेऽस्मिन् "भिक्षां देहि... भिक्षां देहि ..." इति वचनपटलेषु अध्ययनं बाधाप्राप्तम्। विरक्तभावेन माना उपवनस्य द्वारमागतवती। अपश्यत्, अन्धभिक्षुः सपत्नीकः दण्डायमानः। अन्धस्य पत्नी सतृष्णतया मानां पश्यति। नेत्रे तस्या अनेका आशा। भगिनीसौजन्यनिमित्तं महती आकाङ्क्षा। नारीसुलभसहानुभवाय च असंख्योऽभिलाषः।

माना तु विमुखतया अभाषत।

—न जानासि, विद्यास्थानमिदमिति? यत्र कुत्रापि भिक्षा? स्थानकालादीनां ज्ञानं नास्ति? सर्वत्र मिलिष्यति कुतः?

कातरा अन्धपत्नी न्यवर्तत। मुखे सा एव याच्ञाभाषा। पादे सा एव परिमिता गतिः। मनसि विषादो नास्ति। केवलमग्रेगामिनी सा पतिवर्तिका। पश्चात् अनुसरति अन्धपतिः। पत्नीनिमित्तं मुखे सान्त्वनावाणी। निजनिमित्तं नयने तमोविपणी। अतिक्रान्तुम् अम्याप्यपथः ...।

उद्धवसमीपे एव भिक्षुदम्पती प्रस्थितौ।

उद्धवः समवेदनाप्रवणः संजातः। सहर्षमुपगम्य मुद्राद्वयं समर्पितवान्। अन्धपत्नी कृतकृत्या अभूत्। सश्रद्धं च अपृच्छत्।

—पुत्र···! भिक्षार्थं क्व इह उपयुक्तस्थानम् ? तदर्थं क्व पन्थाः ?

प्रश्नेऽस्मिन् उद्धवः चमत्कृतः । बहुविचिन्त्य अवदत् ।

—मातः ··· ! यत्र प्रणामः नूतनः, यत्र च सम्बोधनं जीवनं तदेव भिक्षार्थं समीचीनं स्थानम् । त्वत्स्वीकृतपन्था एव पन्थाः ।

भिक्षुदम्पती अपसृतौ ।

उद्धवः चिन्तयति— मातुः समधर्मिणीकाव्यजगति अन्धपत्नी एव नायिका ।

तमः प्रकाशयोः मध्यसरणिः अनयोः संप्रीतिपन्थाः । मन्थरगतिरेव जीवनी । अल्पमेव तृप्तिः । मुष्टिपरिमितं च आश्वस्तिः । परस्परसमर्पणपर्याप्तिः । एकवचनमपि च दिनचर्यायाम् आकूतिः ।

उद्धवः विलम्बेन विद्यास्थानम् उपगतः ।

अपश्यत्, विद्यार्थिनः कातराः । परिवेशः निरीहः । माना गंभीरा । उपवनं स्पन्दमुपास्ते ।

उद्धवस्य मुखं विकृतम् ।

मुखविकृतितः माना तस्य मनोभावं सम्यक् अन्वमिनोत् । कृत्रिमहास्यम् अधरे जनयन्ती प्रस्थातुमुपक्रान्ता ।

—किमर्थं खिद्यसि ? त्वम् आगतः ।

मम कार्यं समाप्तम् । इदानीमेव प्रस्थानं करोमि ।

उद्धवः नीरवः । माना गम्भीरभावेन प्रस्थिता ।

प्रत्यागमनसमये माता मन्वना आसीत्। उद्धवः स्नेहदाने निपुणः। अनुशासनं तु न जानाति। तस्य ज्ञानं वर्तते। परं ज्ञानस्य उपयोगं न जानाति। विद्वत्ता वर्त्तते। शिक्षकता नास्ति। अयमेव स्नेहः पश्चात् तस्य दुर्वलतारूपेण प्रकटी भविष्यति इति दूरदृष्टि रपि नास्ति। स्नेहात् अस्मात् पीयूषं न जनिष्यति। आविर्भविष्यति केवलं मन्थनम् ...... आत्मदाहः ...... ।

एकपार्श्वे उपासना। अपरपार्श्वे वासना। मध्ये उद्धवःस्वयमेको दुर्भिक्षनिवासः। अर्हमिदमोः निजस्थसंसारः।

तद्दिने माता विरक्त भावेन अवदत्।

—उद्धवः•! शस्यभूमिः अद्यापि अवहेलितः। न कोऽपि तत्र गच्छति। पिता तु वृद्धः। यदुत्पद्यते तत् केवलं वहिःस्थाः खादन्ति। दिनमासीत् तेषां मनसि भक्तिः आसीत्। स्वेच्छया ते उत्पन्नतः अर्धं प्रदाय आत्मीयाआसन्। अद्य तु न कोऽपि किमपि ददाति। नाम्ना शस्यभूमिः अस्माकम्। परमधिकारः तेषाम्।

—किमर्थं व्यथसे ? अधुनैव किं भवति, पश्यामि।

उद्धवः शस्यभूमिं प्रतिष्ठते। इतस्ततो विचिन्त्य विस्मयते।

अद्भूतं जनचरित्रम्। अहो, दुर्दम्यः तेषाम् अधिकारमोहः ?

मध्याह्नं तपोरतम्। शस्यभूमिः निकटायते। अदूरे वटपादपः स्थविरः। वंशीमूर्च्छना नीरवतां प्रसारयति। क्लान्तगावः वटमूले रोमन्थायन्ते।

—कोऽयं शाश्वतस्पन्दनां मे हृदये जागरयति ? माना ...वा··· मूर्च्छना ......... वा ?

इत्थं विमृशन् वटमूलमुपगत उद्धवः । वंशीवादकः उद्धवस्य चरणे प्रणिपतितवान् ।

— अरे , मुकुन्दः ...... ! त्वम् अत्र ?

— हँ , गुरुदेव ... ! गोचारणं नः परिवारजीविका । प्रातः भवन्निकटे अध्ययनं समाप्य प्रतिदिनम् अत्रैव गोभिः सहचरामि ।

मुकुन्दः उद्दामकिंशोरः । विद्यार्थिषु चतुरः । नितराम् आकृतिमान् । हृष्ट पृष्टः सः अतीव उत्साही । विनयी सः प्रतिकार्यम् आग्रही । उद्धवस्य स्वतः श्रद्धा तस्मिन् । वंशीवदने निपुणः इति सः सर्वेषां श्रद्धा भाक् ।

—मुकुन्दः ... ! मनाक् सहाययितुं शक्नोषि ?

— कस्मिन् कर्मणि ...... ?

—ममात्र शस्यभूमिः वर्तते । येभ्यः क्षेत्रमिदम् उन्नतये प्रदत्तं ते अधुना अधिकारं न्यस्यन्ति । उत्पन्नतः अर्धं अस्मभ्यं तेषां देयम् । कि·तु किमपि ते न ददति । मम इच्छा तु— ते जीवन्तु । अहमपि जीवेयम् ।

—विषयेऽस्मिन् भवतां चिन्ता मास्तु । अद्य प्रभृति कार्यमिदं मयि न्यस्तम् । सर्वमहं स्वयं संपादयिष्यामि ।

निश्चिन्तः उद्धवः प्रत्यागतः ।

पश्चात् मुकुन्दस्य अनाहतमूर्च्छना । अग्रे मानायाः कज्जलसजल-नयनम् । उभयं समन्वयन् उद्धवः प्रसन्नः । मनसि चिरतरायते तिरोहिता कैशोरधूसरगीतिः । तथापि क्लान्तिः पुलिनस्य विलम्ब-विधूतिरिव । आत्मनि केवलं त्रिनम्रलहरीणां निःस्वनिमस्थितिः ।

अनध्याय वासरोऽयम् । उद्धवं गृहे अप्राप्य प्रत्यावर्तते माना । मन्थरा सा मनाक् विषण्णा । गमने तस्या अलक्ष्यलास्यम् । पश्चात् लक्ष्यते सा यथैका लीलाविधुरा उपत्यका ।

सहसा माना चकिता ।

अदूरे छायालुतरुः । मूले सुप्ता वर्तते पूर्वपरिचिता भिक्षुणी । तल्पायते तस्या अञ्चलम् । एकपार्श्वे स एव अन्ध उपविष्टः । पत्नीशरीरे करं चालयति । मुखे तस्य कोऽपि संकेतो नास्ति । नेत्रे केवलं तमी भ्रमिः । क्लान्तपत्नीनयने प्रकाशोऽपि क्लान्तः ।

अन्धस्य अधरे बन्धुरा गीतिः केवलम् आत्मप्रणयिनी । समधर्मिणी सर्वाङ्गे स्वस्तिमान् स्पन्द एव आयुष्मान् । तस्या आश्वस्तिः निश्वासश्च अन्धाय निर्बन्धनम् । स्पर्श एवात्र आविष्कृत-स्वरूपः ... शान्तये पन्थाः । पुनः प्रकाशसंचयार्थं इन्धनसिन्धुः । भेदे अभेदविन्दुः ।

मानाहृदये निर्विकल्प वाक् स्फुरण शीला । सा स्तब्धा । सम्मुखे तस्याः प्रकाशनिकटे तमसाया आत्मसमर्पणम् । दीपो निर्वापितः । दीप्तिश्च निजस्था । निकटस्थाऽपि दीपिका प्रकाश प्रसारे कातरा... ।

गोधूलि वेला ।

----नजते वृद्धोदासो वासरः। लब्भते सुकुमारी संध्या । नीरवता निरीहते । मानामानसे भासते तदेव दृश्यम्। स एव अन्वः। सा च दीप्तिव्रता पत्नी । तयोः विशुद्धसायुज्यम् । समयेऽस्मिन् मुकुन्दस्य प्रत्यागममूर्च्छना मानाया अन्तः करणे स्वरलिपिम् अङ्कुरयति । कुज्झटिकायाम् उज्वलति अहमिदमोः संप्रीति तारका । --

प्रतिदिनमिव अद्य मुकुन्दः समागतः। अद्यत्वे सः उद्धवस्य मनोवार्ताहरः। उद्धवः यद् वदति यच्च चिन्तयति तत् सर्वं वदति। प्रगल्भ भावेन आत्मानं च समर्पयति मानानिकटे। माना उत्फुल्लति। मुकुन्दस्य पृष्टाङ्गे तस्या दृष्टिः क्षणाय विकारमारोप्य आत्मस्था भवति। इत्थं प्रत्यहं सुखालापे सध्या अवनम्यते । मुकुन्दः प्रत्यावर्तते ।

मुकुन्दः ज्ञातुं न प्रभवति, किमर्थं तस्य स्नेहः यथा उद्धवं प्रति तथैव मानां प्रति क्रमशो वर्धते। उभयत आकर्षणम्। आकर्षणेऽस्मिन् सः सर्वं विस्मरति। परम्, उद्धवस्य अध्यापनविवरणं सर्वदा मनस्यति। जीवनप्रकरणे तत् समन्वयति। तथापि तस्य याथार्थ्यप्रतिपत्तिः न भवति। विषयस्य परिणामव्यवस्थितिः न संजायते। अन्ततः सन्देहः साध्यवान् भवति। चिन्तान्तराले केवलीभवति उपवनस्य श्रीचक्रम् ......अनुनय विनय नेपथ्ये तत्र च लतापादपयोः सायुज्यनिह्नुतिः।

मुकुन्दः मुग्धः।

वंशीस्वनप्रीत उद्धवः तद्दिने उपदेशच्छलेन उदाहरत्।

—मुकुन्द...! वेणुमूर्च्छनासु त्वं तन्मयः। जानासि, किमत्र कारणम्? किमर्थं वा मूर्च्छनामुत्तोलयसि?

वेणुविलचुम्बनस्य अभ्यस्त प्रणाली प्रत्यभात् मुकुन्द मनसि तदा। निरुत्तरः सः केवलं स्मितछलेन अज्ञानम् उत्कटी कृतवान्। ज्ञातसार उद्धवः तथ्यं न्यरूपयत्।

—अभिकर्षमण्डलमिह चरमपदम्। मूर्च्छना अस्य धर्मः। मूर्च्छना सदा प्रसरणशीला। अतः जीवः मूर्च्छनामेव अनुभवति, परम् अभिकर्षमण्डले सः वर्तते इति ज्ञातुं न शक्नोति। पश्य, यदा त्वं तन्मयः, यदा वा प्रहृष्टः तदा किम् अनुभवसि ? न किमपि। तस्मिन्नेव मूर्च्छनातरङ्गे त्वं तरङ्गमयो भवसि। तरङ्गरूपेण अभिकर्षमण्डले प्रविशसि। स्वयमभिकर्षो भवसि। परं, तद्रूपेण स्थातुं न शक्नोषि। पुनः मूर्च्छनातरङ्गे वहिः प्रत्यावर्तसे। निजाविष्कृतिं च विस्मरसि। आत्मानं भिन्नं मनुषे। परं पश्य, भेदोऽयम् अभेदस्य वहिर्मुखप्रतिभास।

मुकुन्दः कियत्कालम् अन्यमनस्कः। एकदा माना प्रीता सती पारितोषिकरूपेण पुष्पमेकम् उपाहरत्। वेणुवादनाय उत्साहं प्राप्तवान् मुकुन्दः तद्दिने। परमद्य तस्मिन् मानाया मुखमण्डलं प्रतिफलति। मुखं पुष्पं च अभिन्नम्। तंत्र च सौन्दर्यस्य ईश्वरीभूत परिप्रकाशः नवीयान्।

मुकुन्दः पुष्पं गृहीत्वा रहसि उपस्थितः। तत्र च निमीलित-नयनः सः पुष्पमधरे संस्थापितवान्। सहसा शरीरे वेपथुः समजनि। लोमानि उद्टङ्कितानि। स्नायुः सचेतनः संजातः। हृदयं कातरमभूत्। विपर्यस्तो मुकुन्दः निजदेहं द्रष्टुमनिच्छन् दीपं निरवात्।

रजनी विक्लवा। सः चिन्तयति, तस्य अनुभूतिषु महासत्यं प्रकाशं वितनुते। प्रकाशोऽयं सुप्रभः। प्रतिमुहूर्तं उन्मेषशीलः।

प्रतिभाति प्रतिभाययति च । प्रतिभानमिह अभिकर्षस्य निजस्ववीजाञ्जलिः । नकटीभवमस्य प्रकटपरिचितिः ।

प्रातः रश्मिषु तदेव कुसुमं म्लानम् । मुकुन्दः निरैक्षत, तस्य निश्वासः तस्य च अधरस्पर्शः पुष्पस्य म्लानकारणम् । नाधुना तस्मिन् तथा अनुरागः तस्य । स्वयं चिन्ताक्लान्तः सन् आत्मानं पृच्छति ।

—किमर्थमिद विकलदृश्यम् ?

—मुकुन्द... ! मुकुन्द... ।

मुकुन्द उपद्वारमागम्य उद्धवं प्रणतवान् । स एव शान्तशीलः । स एव उदारस्वभावः । परंपरासु आत्मानं विभूष्य दण्डायमानः । मुकुन्दः उपवेष्टुमन्वनयत ।

—मुकुन्दः... ! त्वं तु जानासि, पितरौ मे उपनीतौ चरमे वयसि । अद्यत्वे तीर्थाटने उभयस्य मतिः । बहुवारम् आदिष्टोऽहम् । परं कदापि तयोः अभिलाषं पूरयितुं न समर्थः संजातः ।

—किमधुना चिन्तयति भवान् ?

—संप्रति उभयं गृहीत्वा कियत्कालं तीर्थाय प्रस्थानमिच्छामि । अतः अध्यापनस्य तावत्कालपर्यन्तम् अवकाशं घोषयितुं चिन्तयामि ।

—तर्हि...... ?

पश्य, मकुन्द ! पित्रोः प्रीतिरेव मम इतिहासः । प्रीतिश्च काले काले जीवनस्य ऐतिह्यं निर्माति । मम प्रस्थानतः पूर्वम् इदमहं स्पष्टीकरोमि

यथा त्वयि तथा मानायां मे अतुलनीयः स्नेहः । तद्वशात् समागतः अत्र । स्नेहवशाच्च न्यासमेकम् अर्पयितुं सन्नद्धः ।

—कीदृशो न्यासः ?

—मम सीमितशस्यभूमिः , लघुपवनं , लघुकुटीरं च अद्यप्रभृति त्वयि मानायां च न्यस्यते । अनेन सर्वस्य संरक्षणं स्यादिति विश्वसिमि ।

—महान् अयं भारः ......

तदर्थं न भेतव्यम् । शीघ्रं प्रत्यागमिष्यामि । माना अपि ते सहायिनी भविता ।

माना इति नाम शृण्वन् मुकुन्दः अधोमुखः संजातः कातर भावं च निह्नूय अङ्गीकारमुद्रया उद्धवं प्रणतवान् ।
आश्वस्त उद्धवः प्रत्यागतः ।।

माना मनसि अद्यापि संलग्ना वर्तते अन्धजायायाः तद्दिन निद्रा । अद्यत्वे सा अनुभवति —प्रकाशः निष्पौरुषः । तमसा निकटे आनतः । आत्मसंप्रदानाय विकलः । तमसा च वर्णिला । वैचित्र्यवितान मेव तस्या लीला ।

सा आत्मनि मथ्नाति—उद्धवः उपास्यः । मुकुन्दः उपासकः सा च अयोगवाहिनी उपासना । तस्या माध्यमेन उद्धवस्य गुणाः मुकुन्दं संक्रमन्ते । गुणसंक्रमण फलेन मुकुन्दः उद्धवायते । उद्धवश्च मुकुन्दस्य मूर्च्छना मुपास्ते । अतः सोऽपि कदा कदा मुकुन्दायते । उभयमध्ये सा स्वयं यथा घने सौदामिनी ।

प्रकटनस्य निर्दिष्टस्थानं वर्तते । वस्तुनः अभिव्यक्तये आत्मीय-मुहूर्तमपि अपेक्षते। निजगोलकं मनसा अन्वेषयति माना । अधुना उत्तरषोडशे तस्याः स्थितिः । सा यदा षोड़शी अभूत् तदा वक्षसि उरजस्य आविर्भावमाविष्कृत्य चमत्कृता । सा आत्मानम् अपृच्छत् । सा तु मूलतः स्त्री । मूलत उरजस्य प्रकटनं कथं नाभूत् ? ततः तया सिद्धान्तितम्— आत्मीयगोलक एव प्रकटनस्य तपोवनम् । गोलोको-ऽयम् अहमेतदोः आत्मीयनिर्यासः ... स्थितिमयः ... कालसमुच्चयः । माना अद्यापि पुनः स्वस्मिन् अभिनवान् आविर्भावान् द्रष्टुम् अपेक्षते । प्रकटीभवनमेव उपास्ते ।

सद्यःस्नानेन निजनेपथ्यं व्युत्पादयति उषाः । जलेषु कुण्ठितशरीरं छलयति ग्राम्यकुमारी । सरोवरकुलिने शाटीका यथा वृक्षमूले तनीयान् पुष्पस्तूपः । निष्प्रभाति तमसा ।

मङ्गलमुहूर्तेऽस्मिन् पुरःसरन्ति तीर्थयात्रिणः—पिता, माता, उद्धवश्च । प्रान्तरमार्गः रैखिकः । यष्टिसहायो वृद्धः पुरोभाक् । विनम्रकुसुममिव जननी मध्यस्था । जननीनेपथ्ये संप्रीतिमय उद्धवः पुण्यश्लोकः ।

प्रभातकर्मकलापं समाप्य माना उपगता । परम्, आगमनं विलम्बितम् । उद्धवस्य लघुकुटी पिनद्धा । परिवेशः कवोष्णः । उपवने विलम्बकाकलिः कल्याणप्रिया । निर्मन्त्रा प्रथमसध्या वन्ध्यायते । दिवारम्भस्य रूप-सम्भारः तथापि पूजाप्रवणः । अञ्जलिं विधाय सकृत् प्रणतवती सजल-नयना माना ।

प्रत्यागमनाय सा उद्यता । विधूयते अवसरविनोदः । व्याप्रियते विप्रलम्भः । विदूरगीतिविधूननम् आकुले मनसि मुकुलायमानम् ।

समयेऽस्मिन् मुकुन्द उपगतः ।

— मुकुन्द ... ! कदा एते प्रस्थिताः ?

— न दृष्टाः किमु ?

— नहि ।

— अहं तु अग्रे चतुष्पथे मिलित्वा आगतः ।

— कः सन्देशः ?

— अधुना गृहभारः भवत्यां न्यस्तः । उपवनभारश्च मयि न्यस्तः ।

— कियत् कालं यावत् ?

— जानाति तु भवती ।

— पश्चान्न परिवर्तितः ?

— नहि ।

— मातुः कः सन्देशः ?

— सा तु अस्वस्था आसीत् । विशिष्य किमपि नोक्तवती । मम प्रणामसमये मनाग् विहस्य सा प्रस्थिता ।

दण्डायमाना माना मुकुन्दं पश्यति । मुकुन्द आलापतो विरम्य उपवने भ्रमति । उपवनमिदम् अद्यप्रभृति तस्य इति स आत्मानं बहुमन्यते । परितः तस्य अधिकारः । स एव सर्वस्य अधीश्वरः । आत्मना लीलामधुरः । तस्य लीलायां कुण्ठिता माना तु प्रतीपा । तथापि मुकुन्दस्य अनुरागधारायां सा एव श्रावणी ।

गृहं माना प्रत्यागता गृहस्तु स एव प्राचीन परिवारः । परंपराया आवृत्तिषु विवेकी वयस्कः । पुत्रकन्यायाः परिणय चिन्तया नितरां

भाराक्रान्तः। अभिवृद्धये क्रान्तिस्पृहः। संकल्पनिर्मित्तं सुकान्तः।

गृहेऽस्मिन् मानाया विवाहविषयिणी चिन्ता वितता जल्पनाऽपि महती। माना मनसि आनन्दः प्रतिमायितः। सा रहसि उपविश्य श्रवणैकमानसा संजाता। परं कियत्समयानन्तरं विषण्णा अभूत्। यतः चर्चा उद्भवविषयिणी नासीत्। तथापि मिलिन्द इति नाम श्रुत्वा सा चमत्कृता।

मिलिन्दः अधः पतितः अभिजातः। आभिजात्य परंपराया अवशिष्टः अङ्कुरः। नष्टकर्पूरस्य मञ्जूषायमानः प्रतीकः। जीर्ण-परिवारस्य आदर्शभग्नांशः। परं तस्य सिद्धान्तधारा अद्यतनीयसमाजस्य क्लीवकला एव। तथापि समाजस्य अपादर्शेषु आभिजात्याय मृगया तस्य धारावाहिनी।

अद्य मध्यवित्तीय-कार्यकलायां मिलिन्द उद्योगी। कायस्थवृत्या सः लिपिकः। सरलाऽपि जटिलेयं जीविका। उपार्जनं न पर्याप्तम्। परं न उपवासकारकम्। तथापि पारिपार्श्विक मूल्यवोधनिकटे इदमु-पार्जनम् अकिंचित्करम्। एतदर्थमेव बहुषु स्थलेषु वृत्तिः परित्यक्ता। नूतनजीविका अङ्गीकृता। तथापि मनसि शान्तिर्नास्ति। सर्वत्र अनु-भवति, धाराद्वयमेव जीवनम्। एका निष्पौंसधारा। अपरा पौरुषधारा परमनयोः नपुंसकता एव सर्वदा प्रभावशीला। यत्र क्लीवत्वं स एव कृतविद्यः। स एव वीरः। स एव श्रेष्ठसेवकः। यत्र पौरुषं साक्षात्शीलं तत्र जनः निर्जीविकः ... अहंकारी .. संशयात्मा ...।

परिस्थितिः न पक्षपातिनी इति मिलिन्दः धीरः, स्थिरः स्थविरः। तथापि कदा कदा पौरुषं विप्लवप्रवणम्। परं सः किमपि कर्तुं न

शक्नोति । क्रान्तिभावना उत्थाय केवलं स्वस्मिन् विलीयते । अतः नपुंसकता एव अन्तत्वे तस्य निजस्वभावन्वयी । सः किमपि समाधानं न प्राप्नोति । अन्ततो निश्चिनोति, नपुंसकत्वमेव मूलभूतं सहजतत्त्वम् । पौरुषं तु जीवनस्य उपाधिमात्रम् ।

एतदर्थं मिलिन्दः मूलतो विवाहविरोधी । परमद्य मातामहीकथां स्मरति । मनसि अपूर्वानुरागो जन्यते । तद्दिने मिलिन्दः अपृच्छत् ।

— मातामहि ! सरस्वती तु ब्रह्मणः कन्या । पुनः तस्य पत्नी इति कथाऽपि वर्तते । अनयोः विवाहः केनप्रकारेण सञ्जातः ?

— अरे, मिलन् ...... ! शरीरमतीव विचित्रम् । प्रतिशरीरं स्त्रीत्वं पुंस्त्वं च वर्तते । परं सर्वत्र प्रकटनसामर्थ्यं नास्ति । तथापि उभयस्य निर्दिष्टसमये निर्दिष्टस्थाने च अभिव्यक्तिः भवति । सरस्वती ब्रह्मणो देहजा । तस्याः पत्नीत्वेन अङ्गीकारो नाम ब्रह्मणः आत्मनः स्त्रीत्वस्य अङ्गीकारः । अङ्गीकारोऽयं पुनः अस्मदर्थं उपदेशः । अतो विवाहो नाम आत्मनः स्त्रीत्वस्य पुंस्त्वस्य च स्वीकारः । एतदर्थं जीवो नैकाकी रमते स द्वितीयमिच्छति । द्वित्वानुभवे आत्मन एकत्वस्य पूर्णता ।

मिलिन्दः अद्य परिणेतुं सन्नद्धः ।

मानायाः विवाहपूर्वरङ्गेऽस्मिन् अद्यापि अन्धदम्पती प्रकाशं कीरतः । स्थितिरियं जीवनयात्रायाम् अन्यतमा पान्थशाला । परिणामशालिनीयं स्थित्यन्तरजननी । श्रमसर्वस्वा पुष्करिणी । अद्यतु माना उद्धवस्य मुखं मुकुन्दस्य शरीरं कामयमाना मिलिन्दं प्रतीक्षते । परितः परिस्थितेः उद्वेलनम् । अभिलाषान्तराले गुप्तपिपासा शाश्वती । नारीत्वं प्रकट्यं वाञ्छति । अतः सा समर्पणप्रवणा ।

अगुरु चन्दनकर्पूरमादकतासु माना वधूः संजाता । वसनालंकारेषु अभिनवा सा अभिप्रेया अभूत् । शृङ्गारसुगन्धिषु मिलिन्दो गन्धमयः संपन्नः ।

मुकुन्दः विवाहसन्देशं लब्धवान् ।

उद्धवस्य उपवने मुकुन्दः लीलाप्रणयी । उपवनमिदं तदेव लीलास्थलम् । अद्यत्वे अत्र अनेका किशोरी । वेणुमूर्च्छनायाम् अत्र कलिका सार्थजीविनी । तथापि मुकुन्दस्य मनो न रमते । तथापि अनुपलब्धिः । तथापि अभावः । प्रातः स्नानविधुरम् । दिवस आन्दोलने पर्याकुलः । संध्या त्रिवाभाविनी । पुष्पाणि न स्पृहाशालानि । लता न प्रगल्भाः । वृक्षा वैशाखप्रणयिनः । शारदीमूर्च्छना रुचिजीर्णा । अनुभूतिश्च प्रातिपदिकी ।

किमर्थं विरागः ? कुत इदम् अनुरागदौर्बल्यम् ? मानात उद्धवतो वा ? माना विदूरा । उद्धवोऽपि विदेशी । अद्य उभयतो विरहः । अयं तु संसारसारः । कियत् क्षणकृते साक्षात्कारः । तस्मिन् च स्नेहातिशयः । तेन कश्चित् शान्त उन्मादो भवति । ततः सहज-शान्तिं विस्मरति । तदनु केवलं विधूननम् । विधूननम् अतिक्रान्तुं न शक्नोति । तस्मिन् विमन्थनं तस्य विभूतिः भवति । ततः पुण्य-निमेषमन्विष्य सहजस्वरूपाय प्रतीक्षते ।

मुकुन्दस्य प्रतीक्षायाम् अद्य उपवनं मुकुरायते । प्रतिबिम्बते मानायाः उद्धवस्य च प्रसन्नमुखमण्डलम् । उभयस्य अव्यक्तलीला अत्र फलकाङ्क्षिणी । साक्षी केवलं मुकुन्दः ।

वेणुमूर्च्छना तीव्रतरा । मुवकाशवासरो नीतिभ्रष्टः । न्यस्तभारो

विस्मृतः । उपवनं दुष्कुलीनम् । करणीयम् उपेक्षितम् । मुकुन्दस्य समग्रग्लानिषु स्वरसाधना एव दीपिका । मूर्च्छना च आरधना । मृगया निर्लक्ष्या ।

परिवेश आचारसम्पन्नः । संस्कारशालिनी गङ्गा पूर्ववत् पुण्या । अत्र विन्दुः प्रवाहसर्वस्वः । प्रवाहश्च विन्दुसर्वस्वः । वुद्वुदाः प्रणव-प्रेमिणः । प्रणवश्च तरङ्गमयः । नदीयम् आदिश्रृङ्गारिणी । परस्परा अत्र ऐकतानिकी . नदी, नदीशय्या, पुलिनं च तीर्थेऽस्मिन् संस्कृतिः ।

अद्य इह उद्धवः सजनकः । रोगातुरा जननी अत्र वैकुण्ठगामिनी अभूत् । तदनु उद्धवः विषादप्राणः । मातृसेवा तस्य सम्पन्ना । शेषकृत्य-मपि समाप्तम् । इतः प्रभृति तस्य वाल्यं विगतम् । न कोऽपि तं वाल इति सम्वोधयिष्यति । मातुः समीपे वयोवृद्धोऽपि पुत्रः वाल एव । यदा जननी स्वर्ग गच्छति तदैव पुत्रस्य वार्धक्य माविर्भवति । उद्धवस्य अनुभवे अद्यत्वे वयोभारस्य स्पर्शः ।

जनकजननीसेवा उद्धवस्य चरमविनोदः । एतदर्थमेव सः तीर्थ-यात्री । एतदर्थं पदातिकः ......निजश्रीकातरः ......आज्ञावहः । सः जानाति, वाल्यं वात्सल्यमिच्छति । कैशोरं श्रद्धामिच्छति । परं तस्य अनुभवे अद्य चतुर्थस्थितिः । सः वृद्धोभवितु पुरःसरः । वार्धक्यं तस्मिन् सम्मानमभिलषति ।

तथापि पितुः वात्सल्ये उद्धवो वालः । पितुः न कोऽपि अभावो वर्तते इति जानन् सः सुखी । मातुः गमनात् परं उद्धवः वारंवारंपृच्छति — पितः ...... ! किमपि अस्वस्थमनुभूयते ?

उत्तरं सर्वदा नेतिकारस्य।

चरमे वयस्यस्मिन् रोगस्तु सहचरः । पिता कदा रोगमुक्त इति निश्चित्य वक्तुं न शक्यते। किन्तु सेवाप्राणं पुत्रं निकटे प्राप्य पिता नितरां सन्तुष्टः। आत्मनि च धन्य इति रोगशय्यायां विजल्पति।

— पुत्र! न किमपि अस्वस्थमनुभवामि ।

— वदतु, किम् आवश्यकम् ?

— न किमपि। स्वस्थोऽहम् ...... शान्तोऽहम् ...... ।

अवसरेऽस्मिन् उद्धवः मातुः प्रार्थनां स्मरति। सा शेषपर्यन्तमपि जल्पन्ती आसीत्।

— युवयोः पितापुत्रयोः निकटे मम जीवनमपैतु। इदं मे प्रथमकामना। इदं पुनः मे आनन्दः ...... अपवर्गः ...... स्वर्गः ......।

तदेव अभूत्। तथापि तस्य एका कामना असफला। अद्यतु सा एव कामना पितुर्मनसि

— उद्धवो न सपत्नीकः।

किमर्थमियं सपत्नीकता ? समीपे उत्तरं सुस्पष्टम्। तथापि उद्धव आलुड्यमानः —

यदिनयनपिधाने निजसंसारः समाप्तः तर्हि किंनिमित्तं सांसारिकता ? तर्हि, मानायाः तेन सह कः संपर्कः ? मकुन्देन सह वा कः सम्बन्धः ? मानानयने तृष्णा। मकुन्दमूर्च्छनायां पिपासा। स्वस्य अन्तःकरणे सर्वत आकर्षणस्य स्पर्शः। तदनु उद्धवः अनुभवति — सर्वत्र एक एव प्रणवः। तदर्थं विपुला जपामाला। विभिन्ना वैखरी। पुष्कला स्पन्दलीला।

उद्धव आग्रही। गृहं प्रत्यागमिष्यति। पितुः सेवार्थं तत्र सर्वं सुकरम्। तीर्थेऽस्मिन् तु न कोऽपि पश्यति। सर्वं पृथक्। कस्यापि कं प्रति ध्यानं नास्ति। सर्वमिह निजनिष्ठम्। सकलाऽपि कृतिः वैयक्तिकी। अत्र क्व सेवाया अवसरः? सेवार्थं गृहमेव स्वर्गः।

पिता अस्वस्थः। उद्धवनिकटेऽपि पर्याप्तं धनं नास्ति। कियच्चिरं वा तीर्थे निवासः स्यात्? अतः सजनकः प्रत्यावर्तते। मनसि विषादः। उत्साहोऽपि। मानामेव सर्वं श्रावयिष्यति। मुकुन्दं च तस्य न्याससुरक्षार्थम् अभिनन्दिष्यति।

प्रणवोऽधुना उत्सर्गप्रवणः।

माना जननी। सा पुत्रवती। तस्याः पूर्वचाञ्चल्यं विलुप्तम्। नेत्रतृष्णाऽपि क्षीणा। अनुरागो बलवत्तरः। सा आत्मनि गभीरा। अद्य न तस्यां छलना न वा आतुरता। गौरवमयी सा अद्यत्वे संसारस्य निश्चितवर्त्मनि। मार्गेऽस्मिन् न उद्धवो न वा मुकुन्दः।

पुरःसरः केवलं सहधर्मा मिलिन्दः।

मिलिन्दस्य पूर्वस्वभावः अद्यापि तथा। स इच्छति यस्य परिश्रममूल्यम्। परिवारः पारिवर्धितः। भोक्तुमुदरा अपि अधिकाः। ये क्लीवत्वमङ्गीकृत्य सेवारताः ते अधुना सम्मान्याः। ये च भ्रष्टाचारजडिताः ते विशालाः। पौरुषस्य पारितोषिकं कुत्र? ये विश्वासघातकाः, ये च विश्वस्यघातकाः ते एव पुरस्क्रियन्ते......पारितोषिकैः विभूष्यन्ते। ते एव विराजोऽधिपुरुषाः।

इत्थं मानया सह बहुवारं कलहं कृतवान्। अद्यापि कलहरतः ......प्रतिशोधमुखरः। एतदर्थं मानाऽपि प्रतिवदति।

— किमर्थं भवान् उत्क्षिप्तः ? संसारो यथेच्छं गच्छतु । का हानिः ? निजनयनपिधाने अस्माकं संसारस्तु समाप्तः ।

— तर्हि त्वमिच्छसि, क्लीबोऽहं भवानि ?

— यदि पौरुषस्य आदरो नास्ति तर्हि आदर्शरूपेण तस्य पूजा किमर्थम् ? वस्तुतः पौरुषद्वारा धनार्जनं न सम्भवेत् ।

— तर्हि, क्लीववृत्त्या अभावं पूरयिष्यामि ?

— अभावपूरणस्य मार्गो भिन्नः ।

— किमत्र पौरुषं नापेक्षते ?

— पौरुषं तु काले काले आदर्शः । आदर्शं निमित्तं त्याग आवश्यकः । भोगोद्देश्यक आदर्शो न तिष्ठति ।

— संसारमिमं त्वं वोढुं न प्रभवसि ।

— जाने भवतः अभिप्रायं सम्यक् । अद्य अस्माकमाशा अधिका । आवश्यकता अपि प्रचुरा । एतदर्थमभावोऽनुभूयते । इतः पूर्वं तु एतादृशी स्थितिः नासीत् ।

— आसीत् । अधुना वर्धिता ।

— एतदर्थं भवान् विप्लवी ? एतदर्थं प्रतिशोधमुखरः ? किमनेन भविष्यति ? केवलं मे पुत्रस्य क्षतिः । मम च सर्वस्वहानिः ।

मानाया वचनं निजीकृत्य कलहतो विरमति मिलिन्दः । परं मनो न शान्तं भवति । विरक्तिः हृदयं न त्यजति । प्रतिशोधः सर्वाङ्गे स्फूर्तिशीलः ।

माता तु नितरां दुःखिनी। बहुशो बोधयन्ती अपि न स परिवर्तते। पिता संजातः। तथापि पूर्वभावं न त्यजति। सा एव दाम्भीकृता मनसि। को वा लाभो भविष्यति ? लाभाशया मनुष्यः संकल्पबद्धो भवति। परम्, उग्रकार्यमादकता तस्य दुःखकारणमेव भवति।

माता व्याकुला। नृत्यति नयने उद्धवस्य शान्तमूर्तिः। स एव सरलस्वभावः। अनुराग विनीतं सुप्रसन्नलपनम्। वचने च शान्तिवाणी। माता उद्धववचनं स्मरति।

— कतिषु अनिश्चितस्पन्दनेषु अस्माकं सर्वस्वं अनिर्वास्यति। संसार एकः प्रवाहः। प्रवाहस्य एकस्मिन्निर्दिष्टनेपथ्ये वयं सर्वे स्पन्दस्य कतिपयविधूननानि एव अद्य अस्माकं साक्षातकार आकस्मिकः। तथैव च वियोगः स्यात्। परम्, अनुरागः एतन्निर्दिष्टकालखण्डाय आवयोः जीवने चरमसामग्रा। जिजीविषार्थं च उपादानम्।

मिलिन्दनिकटे अस्याः शान्तेः मूल्यं नास्ति। शान्तिः विदूरलक्ष्या सामाजिकानां दुष्कृतितः एव समाजस्य दुर्गतिः भवति। प्रथमतो दुष्कृतिनाशः। ततो दुर्गतिः निरस्यति। एतादृक् चिन्तासु वासरः तस्य धूसरः। गृहम् उपेक्षते। पत्नींप्रति उदास्ते। पुत्र प्रति च निर्यत्नः।

माता सर्वमेतत् समीक्षते। मनसि पुनः पुनः आलोचयति। स्वयमपि पतिवचनम् अङ्गीकरोति।

— सत्यम् यत्तेन चिन्तितं सम्यक् चिन्तितम्। परिवारो जीवनस्य उपायमात्रम्। न तु लक्ष्यम्। कीट इव कुटुम्बपोषणं न कदा विकासस्य प्रगते वा प्रतीकम्। कुटुम्बिता व्यक्तित्वविकासार्थं साधनमात्रम्।

सद्गतये परिसरो भिन्नः। एतदर्थं सः पुरोभाक्। परम्, असहिष्णुः संजायते। उग्रमार्गमपि चिनुते। तत्तु न रुचिकरम्। अतः कलहः।

कुटुम्बनिमित्तं साधारणसेवा अद्य उपरिस्थानां सेवा। समाजसेवा जातिमित्राञ्च पुत्र पौत्रबन्धूनां तोषणम्। इदमिह संस्कृतेः रूपान्तरम्। पूर्वजानां संग्रामस्य फलम। प्रातःप्रार्थनायां प्रथमस्पन्दनम्।

मानाया मनसि सा एव अन्वपत्नी अद्यापि प्रकाशं तनुते। सा वहुवारं सन्देशं प्रेषितवती। मुकुन्दः कथं वर्तते? उद्धवस्य उपवनं कीदृशमधुना? गृहस्य का स्थितिः? मुकुन्दः सर्वस्य दायित्वं संपादयति वा? कदा वा उद्धवः प्रत्यागच्छति? तदर्थं किमपि पत्र प्राप्तवान् वा? परं सा कामपि वार्तां न प्राप्नोति।

कालोऽयं तस्याःकृते असमयः। ग्रहः प्रतिकूलः। वर्षकतिपयपर्यन्तमपि सुदशा नास्ति। अतो गृहे कलहः। वहिश्च धनमानहानिः। समयेऽस्मिन् वचनमेकं वोधयितुं कोऽपि नोपगच्छति। अतः सा केवलमुद्धवं प्रतीक्षते।

उद्धवस्तु अद्य तस्य सेवासर्वस्वं गङ्गायां पवित्रीकृतवान्। पिता पञ्चत्वं गतः। महातिर्थेऽस्मिन् तस्य परमाणुः अवश्यं विहाररतः। वर्षैकपर्यन्तं पित्रोः पारमाणवी दशा। ततो मुक्तिः। इत्थं विचिन्त्य अनेकदिनक्लान्तोऽपि उद्धवः पुनरेकवर्षं तीर्थेऽस्मिन् निवस्तुं सन्नद्धः। येन केन प्रकारेण एकवर्षं व्यतीय प्रथमश्राद्धं च समाप्य इतः प्रस्थानं करिष्यति।

तीर्थीया महानगरी रम्या। पुनरिह रम्या वैपणीकता। वदान्यविवृतितले संकीर्णता एव अत्र जीवनी। ॐकारस्य विज्ञापनतले

दुष्कृतिरेव धर्मः। देहोदैहिकता च वाणिज्यभित्तिः। आप्राणधावनमिह ऐश्वर्यम्। परस्परनिरपेक्षता आभिजात्यम्। एकाकी भ्रमतीह उद्धवः। नितराम् उदासः। धनं नास्ति। अतः भोजनस्य नियमोनास्ति। अल्पमपि पर्याप्तम्। उपवासेऽपि नव्याकुलता। यत्र यन्मिलति तदेव अद्यत्वे लक्ष्यम्।

क्लान्त उद्धवः पादपछायातले आसीनः। नयनपुरत उद्यानम्। चिन्तायां तस्य निजोपवनं प्रतिविम्बते। इहतु उपवनमिदं वृहत्तरम्। तत्र एका माना अप्राकृता संजाता आसीत्। इह तु मानासहस्राणाम् अव्यक्तशृङ्गारः समर्पणशीलः। किन्तु ग्राहकाः कुत्र ...... ? रूपोपवनतः शस्यानि अवचेतुं वयो वा कुत्र ...... ?

उदरे क्षुधा महती। तथापि उपवनतो मनो न प्रत्यावर्तते। अपितु रन्तुमिच्छति। परं तस्य करचरणं निरुद्धतम्। सः अनुभवति — नर्तकीचरणे नूपुरं राजते सत्यम्। परं न गृहे। अपितु नाट्यमण्डपे। पुनश्च नूपुरस्य महत्त्वं न केवलमनुरणने। अपितु अलकरणे। गृहे नूपुरानुरणनस्य का आवश्यकता ?

क्षुधावाधा प्रवला। उद्धवः सोढुं न शक्नोति। तथापि याचितुं न प्रभवति। मानिनां हि पौरुषं धनम्। अन्ततो निश्चिनोति, कुत्रापि कर्मकृत्वा वर्षमेकं व्ययिष्यते। ततः तदेव प्रथमभूमिस्पर्शस्य हरित्पुलकम् तदेव विरहविपुलम् उपवनम्। तदेव प्राचीनमास्थानम्।

उत्थाय उद्धवः पुरोन्मुखः। जीविकार्थं व्रती। क्षुधानिवरणाय आग्रही। परं कं वा उपैष्यति ? को वा एतादृशो वदान्यः ? परजन्मनः पुण्यं विश्वस्य वृत्तिमुपहरिष्यति ? कुत्र सः गुणग्राही ?

अकृतिरपि कदा कदा हृदयस्य सूचीपत्रं भूमिका च इति विचिन्त्य उद्धवः समचरत् । अकृतिपरिचये निमेषा दीर्घतरा अभूवन् । अन्ततः स एकं वृद्धश्रेष्ठिनमुपगतः । श्रेष्ठी नाम्ना नवोत्पलः । सदा प्रसन्नः । धर्मानुरागी । अनुभूतिचर्चायाम् आग्रही । परंपरासंपन्नः । अतिथिपरायणः ।

— महाभाग ...... !

उद्धवः शब्दापितवान् ।

— महाभाग ...... !

जीवने नूतनशब्दं श्रुत्वा श्रेष्ठी स्वयं समागतः । सदा जीवने "प्रभो... ! प्रभो ...... !" इति सम्बोधनं श्रुतम् । अद्य तु नवीनोऽयं शब्दः । नवोत्पल आगम्य अपश्यत्, अधोमुखो युवा दण्डायमानः ।

— युवक ...... !

— नमोनमः, मान्य ...... !

— को भवान् ?

— अहम् उद्धवः ।

— किमर्थम् आगतः ?

उद्धवो नीरवः । पुनरधो मुखः ।

— वद !

— अभिप्रायो मे सरलः, महाभग ...... !

— उच्यताम् ।

— तीर्थमिदं दर्शनीयमिति पित्रोर्मे शेषाभिलाषः आसीत् । तत्सम्पादयितुम् अहम् समागतः । दौर्भाग्यात् अत्र उभौ दिवंगतौ । अवशिष्टं मे तदर्थं किंचित् कर्म अत्र ।

— तत्तु गृहे सम्पादयितुं शक्यते ।

— शक्यते । प्रतीक्षा तु वर्षैक पर्यन्तम् ।

— तर्हि, किं चिन्तयसि ?

— वर्षैक पर्यन्तम् अहमपि जीवेयम् !

— तदर्थं जीविका अपेक्षते । जीविकाऽपि गृहनिकटे स्यात् । अन्यथा गृहं नश्येत् । अतः गृहं निवर्तस्व । तत्र काऽपि जीविका स्वीक्रियताम् । गृहस्य रक्षणावेक्षणं स्यात् । पित्रोः तर्पणमपि स्यात् एकस्यकृते तु जीवननिर्वाहो न कठिनः । ग्रामाञ्चले जीवनं न तथा दुर्वहम् यथा अत्र ।

— तीर्थेऽस्मिन् तर्पणे तेषां सद्गतिः स्यात् ।

— यद्यत्र जीविका न मिलेत् ?

— तथापि स्थास्यामि । मम अश्रु श्वासश्च अन्ततः तदर्थं तर्पणं भविष्यति ।

— प्रमत्त इव जल्पसि, युवक !

— भवदर्थं वचनं मे हास्यास्पदम् । परं मया यदवधारितं तदेव मदर्थं सम्यक् ।

— तर्हि, किं कर्तुं शक्यते ?

— मन्ये, ज्ञाता मे स्थितिः ।

समयेऽस्मिन् श्रेष्ठिनः कनिष्ठा कन्या इतिश्रीः समागता ।

— पितः ...... ! कोऽयम् ...... ?

नवोत्पलः शान्तः ।

उद्धवः मनाग् विषण्णः । मृदुतया अभाषत ।

— तर्हि, अहं प्रत्यागच्छामि ।

— अपेक्षस्व । अरे ...... इति ...... ! तव शिक्षार्थं शिक्षक आवश्यक इति उक्तं नु । मया तु विस्मृतम् । अद्य पुनः शुभयोगः । शिक्षकः स्वयं समागतः । अरे ...... याहि ! मान्यस्य भोजनव्यवस्थां कुरु ।

इतिश्रीः अन्तः प्रविष्टा । उद्धवस्य संकल्पं विचिन्त्य नवोत्पलः प्रीतः

— युवक ...... ! इतः प्रभृति शिक्षकपदे ते नियुक्तिः संजाता । अत्रैव स्थास्यसि । किमन्यत् ...... ?

— कृतज्ञोऽस्मि ।

— पश्य, समयः परिवर्तते । मत्समये पृथिवी भिन्ना आसीत् । तव समये च भिन्ना दृश्यते । किमत्र रहस्यम् ...... ?

भोजनपात्रहस्ता इतिश्रीः उपस्थिता ।

— भवतु, भोजनं करोतु । अनन्तरं चर्चा ।

हास्यलपना सा प्रस्थिता । तीर्थेऽस्मिन् प्रथमवारम् अद्य उद्धवः भोजनेन तृप्तः । तृप्तिश्वासं प्रसार्य स आरभत ।

— महाभाग ! एकदा एको दयालुप्रभुः आसीत् । तस्य एको वृद्धभृत्यो नितरामात्मीयः । प्रभोः इच्छामात्रेण स सर्वं करोति स्म । अत्यन्तम् आज्ञावहः । एकदा सः श्रीफलमेकम् आनीय उपाहरत् । प्रभुः प्रसन्नः सन् तस्मै अपि एकं प्रदत्तवान् ।

— ततः ...... !

— भृत्यो यत्र कुटीं विधाय निवसति तत्र प्रभोः गमनागमनमार्गः । प्रभुः प्रीत्या स्थानमिदं तस्मै प्रदत्तवान् आसीत् ।

— श्रीफलं किं कृतवान् सः ?

— श्रीफलमानीय सः अचिन्तयत् — यद्यस्मिन् मार्गपार्श्वे श्रीफलम् आरोपयिष्यामि तर्हि महान् वृक्षो भवेत् । बहूनि च श्रीफलानि फलिष्यन्ति । तदनु सर्वदा तस्मै श्रीफलमेव उपहरिष्यामि ।

— ततः सः वृक्षमारोपयत् , नहि ...... ?

— हुँ, तत् कृतवान् ।

— ततः ...... ?

— ततो यदा वृक्षो वर्धितः तदा सः पशुभ्यः वारयितुं कण्टकैः वृक्षमाच्छादितवान् ।

— तत्तु कर्त्तव्यमासीत् ।

— एकदा प्रभुपुत्रः तस्मिन् मार्गे विहरति । तस्य इतस्ततो गमने वसने कण्टकं संलग्नम् । सः क्रुद्धः संजातः । सरोषं च वृद्धमाकारितवान् । आदिशच्च - इतः कण्टकमपसारय । कस्ते अधिकारोऽत्र कण्टकप्रसारणे

...... ? कण्टकापसारणार्थं ते नियुक्तिः। न तु कण्टकप्रसारणार्थम्। याहि, सत्वरं कुरु।

— ततः ?

— वृद्धः भृत्योऽपि तस्य ममता अस्माकमिव। सः किमपि न प्रत्यवदत्। आदेशमात्रेण कण्टकानि अपसारितवान्। परं सयत्नेन वृक्षमवर्धयत्।

— वृद्धस्तु अतीव स्नेही ......।

— वृक्षो वर्धितः। प्रथमवारं च फलमधरत्। फलं दृष्ट्वा वृद्धः अचिन्तयत्-अस्य प्रथमफलं महादेवाय समर्पयिष्यामि। द्वितीयफलं च प्रभुमुपहरिष्यामि।

— ततः किमकरोत् ?

— एकस्मिन् पुण्यदिवसे सः फलमचिनोत्। भृत्यस्य हस्ते सद्योऽवचितं फलं विलोक्य प्रभुपुत्रः दूरात् अगर्जत् " चौरः .. ..., चौरः ......, चौरः ......।

— ततः ...... ततः ...... ?

— वृद्धभृत्यो गम्भीरः। काऽपि प्रतिक्रिया नास्ति। प्रभुपुत्रः प्रसादत आगम्य तद्हस्ततो बलात् श्रीफल मनयत्। वृद्धः तटस्थः। एकवारं सः प्रभुपुत्रस्य मुखमपश्यत्। सकृच्च महादेव मन्दिरम् अपश्यत्। सकृत् पुनः श्रीफलपादपम् अपश्यत्। प्रभुपुत्रः श्रीफलं गृहीत्वा प्रस्थितः। वृद्धभृत्यस्य नेत्रद्वयम् अश्रुषु रक्तिममासीत्।

— किमत्र तात्पर्यम् ? को वा निष्कर्षः ?

— इदमेव मत्समय संसारस्य रूपम् । रहस्य मिह न केवलं भोग-तन्मयता । अपितु अस्थिरेऽस्मिन् स्थिरीभवनस्य संकल्पो — यत्नः — भावना ...... ।

उद्धवोऽत्र शिक्षकरूपेण विदितः । इतिश्रीः विद्यार्थिनी । विद्या च विज्ञानम् । सौरसंसारविषये सा उत्सुका । अतः उद्धवः बोधयति ।

— सौरसंसारे स्थानमेकं वर्तते । तत्र सदा सुखं विलसति । पृथिव्युपरि तस्य आकर्षणं महत् । अतः पृथिवीजनः सदा तत्र गन्तुमिच्छति । स्थूलशरीरेण तत्र गन्तुं न शक्यते । अतो जनः अणीयान् भवितुं यतते ।

— तत् सम्भवति वा ?

— अत्र किमपि न असम्भवम् । असम्भवं तु स्थूलस्य दीर्घायुः ।

— तर्हि, स्थूलशरीरी तत्र गन्तुं न प्रभवेत् ?

— शक्नुयात् तदा, यदा सौरमण्डले पृथिव्याः स्थानं परिवर्तेत ।

— तत् कथं सम्भवेत् ?

— पृथिवी निजस्थाने प्राचीना । स्वस्थानं प्रति तस्या ममता अधिका । अतः परिवर्तनं नेच्छति । यदि इमां बलात् विकृष्येत तर्हि सा तत्स्थानस्य निकटवर्तिनी भविष्यति । तदभिमुखीकरणं केवलम् अस्याः स्थानपरिवर्तनेन सम्भवेत् । एतदर्थम् आत्मबलो यत्नश्च आवश्यकः ।

इतिश्रीः चकिता । सकृत् सा उद्धवस्य सर्वाङ्गे दृष्टिं समचारयत् । ततः उद्धवस्य नयने तस्या नयनद्वयं सन्निविष्टम् ।

— इति .... ! चर्मणो विश्लेषणे न शान्तिः । चर्म यदर्थमुद्दिष्टं तस्य आकर्षणमिह सर्वस्वायते ।

नयनाग्रे अद्यत्वे मानायाः रूपान्तरम् ...... इतिश्रीः — एका विमुक्ता शैली, — एका यथेच्छलिखनीरेखा, — एका वियुक्ता प्रकृतिः, — विरहम् अपेक्षमाणा आषाढरजनी ..... । परं माना ...... ? माना तु अस्तंगामिनी प्रभाती तारा ...... ।

इतिश्रीनयने उद्धवः जलपूर्णो घटः। तस्य अवनमनमिच्छति सा । अवनमनाय तस्या अनुकूलो व्यवहारः सदा अशिथिलः । महातीर्थतो बिन्दुमितं जलमादाय सा पवित्रा भविष्यति। महाप्रवाहे निमङ्क्ष्यति। अत्र प्रतीक्षा ...... वृथा।

उद्धवः कदा कदा रहसि उपविश्य चिन्तयति — कियद्दिनपर्यन्तं नेत्रमुन्मील्य मार्गचयनं कर्तुं शक्यते ? यस्मिन् कस्मिन्नपि मार्गे एकदा विरामः अवश्यम्भावी ! तावत्कालपर्यन्तं पित्रोः कृतिसमीक्षा एव जीवनावलम्बिनी। अवश्यमेकदा एतत्सर्वं विस्मरिष्यते। परं विस्मृतिः नापेक्षते। अद्य तु निजरूस्वपं विस्मर्यते इति स दुःखी। नहि, पितरौ माना, मुकुन्दः — एते तु जीवनस्य प्रथमपर्याये साक्षात्कृताः। एषु आत्मरूपम् आविष्कर्तव्यम्।

इतिश्रीः केवलम् अनुरागश्रावणी ।

उद्धवस्तु प्रतिश्रुतिमन्थरः।

उद्धवस्य प्रलम्बा अनुपस्थितिः मुकुन्दमनसि नैराश्यमसिञ्चत्। सः अचिन्तयत् उद्धवः न पुनः प्रत्यागमिष्यति। पथि काचित् दुर्घटना आपतिता । अतः कियद्दिनानि अपेक्ष्य स उद्धवस्य समग्रभूमिषु

आत्मानम् उत्तराधिकारी इति उदघोषयत् ।

महदिदं भूमेः आकर्षणम् । एतदर्थं समरः संघटितः । जनाः मृताः । आहता अकर्मण्याः संजाताः । तथापि अनुभवो नाभूत् । वलाका मृता । वृको मुण्डितः । वृषभः अर्धमृतः । पानीयं पाण्डुर मभूत् । पादपो निष्पर्णः संजातः । चक्रवाकनिवासः अभिशप्तः । तथापि आलिङ्गनस्य अर्थो न ज्ञातः । चुम्बनस्य परिणामो नावधारितः ।

मुकुन्दः सन्देहापन्नः ।

अद्य निकटे न कोऽपि आत्मीयः । लीलाप्रणयिनः सर्वे वयोभारं स्वीकृत्य दूरीभूताः । सर्वतः केवलं भयः । उपवनमनुदिनं जीर्यते । निकटीयाः एव प्रतिदिनं काष्ठानि उपवनतः चोरयन्ति । बालका वृक्षान् विमर्दयन्ति । गावश्च प्रविश्य तृणमयप्रदेशान् खल्वाटीकुर्वन्ति । प्रतिवेशिनस्तु कुटीरस्य छदिमपि मुष्णन्ति । अन्ततः, यस्मिन् वृक्षे उपविश्य सः वेणुमूर्च्छनाम् उत्तोलयतिस्म सोऽपि केनापि असहिष्णुना छिन्नः ।

मुकुन्दः अन्वभवत्—इतः ......,

आधिपत्यस्य प्रभावो नास्ति । मूर्च्छनायां लालित्यं नास्ति । अधिकारस्य छायातले मृदुता, मधुरता, मनोऽनुगुणता च नष्टा । सर्वेषामिह केवलमात्मसात् करणाय यत्नो बहुल. । सम्पत्तिरेव ममता । परधनेन प्रभुत्वं च आभिजात्यम ।

मुकुन्दः दुःखी । परिस्थितिरद्य जटिला । समाधानं न मिलति । स हि कर्तव्यच्युतः । उद्धवस्य प्रस्थानतः परं तस्य पादुका पूजनीया आसीत् उपवनेऽस्मिन् कुटीरपुरतश्च तस्य नामफलकं संयोक्तव्यमासीत् । उद्धवस्य सर्वमिदमिति प्रचारणीयमासीत् । यदि उद्धवः प्रत्यागमिष्यति तर्हि सः किं चिन्तयेत् ? ...... किमिदं विश्वासस्य फलम् ? आत्मीयतायाः परिणामः ??

समाधानमन्विष्यन् मुकुन्दो व्याकुलः । मानासमीपं गन्तुं स्थिरीकरोति । परं न प्रभवति । यदि वा उपगम्यते , अवश्यं सा उद्धवविषयं पृच्छेत् । मुकुन्दस्य साहसो नास्ति । सर्वत्र तस्य विरुद्धवार्त्ता सः अपराधी ......विश्वासघातकः......।

विभ्रतभावेन स उपवनतः कुटीरम् , कुटीरत उपवनमिति विहरति । समाधानमन्विष्यति । प्रायश्चित्तमभिलषति । भ्रामं भ्रामं परिशेषतः कुटीरे कज्जलमञ्जूषामेकां प्राप्तवान् । ततो बुद्धिः स्फुरिता । ......... कज्जलमञ्जूषा इयं मानायाः । तीर्थप्रस्थानतः प्राक् माता मानात इमाम् आनीतवती । सा तदा उक्तवती ।

— मुकुन्द .. ! श्वः प्रत्यूषे एव गमनम् । युस्माकं साक्षात्कारः स्याद्वा न वा । उद्धवस्तु मम एक एव पुत्रः । गमनसमये तदुपरि अन्येषां दृष्टिः यथा कलुषा न स्यात् तथा क्रियते मया । उद्धवस्य मस्तके निजहस्तेन कज्जलबिन्दुम् अङ्कयिष्यामि । एतदर्थं मानातो मञ्जूषेयम् आनीता । सर्वे तदा अहसन् ।

अहो कियान् मधुरोऽयम् अवसरः !!

मुकुन्दः समाश्वस्तः। समाधानं लब्धम्। जीर्णकुटीरे सः कियत्कालम् उपाविशत्। तस्य अनुभवे सर्वत्र सैव शून्या लहरी। जीर्णताया आवाहनम्। प्रभुत्वम् ...... अविवेकिता ...... ।

संग्रामो वृथा। आकर्षणस्य पश्चात् धावनमिह कैवल्यम्। अतो विचारार्थमवसरो विरलः। पौरुषस्य अभिनयतले क्लीवत्वस्वीकारोऽत्र अभिरूपता। न कोऽपि किमपि परिचेतुं शक्नोति। प्रासादद्वयस्य मध्यरथ्या एव जीवनद्वयस्य दूरत्वम्। अस्यां च रथ्यां कलुषस्तूपीकरणमेव अत्र भोगः ...... संभोगः ...... उपभोगः ...... आनन्दस्य निजस्वधारा।

सकलहृदये अद्यत्वे प्रतिष्ठार्थं स्पन्दनम्। एतदर्थं च मिलिन्दः संग्रामी। तस्य प्रतिष्ठा पौरुषाय ...... जन्मनः पूर्त्तिनिमित्तम् ...... श्रमस्य मूल्यनिमित्तम् ...... जीवनस्य सद्गतये च। अतः तस्य पुत्रे श्रद्धा नास्ति। गृहे ममता नास्ति। पत्न्याः साक्षात्कारोऽपि विरलीकृतः माना तु गृहे विषधरी। केवलं दंशति। परं दंशनस्य फलं किमपि नानुभवति। पतिः उन्मत्त इव संचरति। पुत्रः अनुदिनम् अवश्यो भवति। यत्र गच्छति केवलं कलहमानीय गृहं प्रत्यागच्छति। तस्यापि सुप्रवृत्तिः न लक्षते। न सः किमपि पठनाय यतते। वाध्योऽपि इतस्ततः पलायते सर्वेषु अपि कार्येषु पितरमेव अनुकरोति। पितातु किमपि वोद्धुं न प्रभवति। न वा अभिलषति। यदा गृहम् आगच्छति तदा पुत्रं भर्त्सयति ताडयति, भीषयति। तथापि पुत्रो यथा तथा। पिता गृहे कलहं करोति। पुत्र श्च वहिः।

माना तु नष्टनीडस्य अभिशप्त स्वाहा ...... विषायित वसतेः उदासीन शोभा ...... असिद्धपूजकस्य विपर्यस्ता चण्डी ... विषण्णवदना अम्बिका सा केवलं कल्याणकाङ्क्षिणी ।

माना चिन्तरता ।

कृषिभूः न विशाला । वहिः धनागमोऽपि न अधिकः । व्ययस्तु वर्धते । आयः व्ययश्च केन प्रकारेण वा सन्तुल्येत ? का वा व्यवस्था अङ्गीकर्तव्या ?

अवसरेऽस्मिन् पुत्रं ताडयन् मिलिन्द उपस्थितः ।

—मूर्खः । सदाकलहायते । निरंतराम् उद्धतः संजातः । दुष्टः ...... । किमर्थं न मृतो मूलतः ? धिक् अस्य जननम् । एतादृशं पुत्रं प्रसूय अहो ...... धन्या ते जननी ...... !!

माना द्वारमुपगम्य अपश्यत् — पुत्रो भूलुण्ठितः । तथापि मिलिन्दः तं प्रहरति ।

—तिष्ठतु ...... ! विरमतु ...... !

बलात् सा पुत्रम् आलिङ्गत् । पुत्रस्तु अर्धमूर्च्छितः । देहः रक्तिमः । नयने लोतकप्लावनम् । कण्ठे स्वरः अवरुद्धः ।

माना वात्सल्यजडा अभूत् । आहता विषधरी इव सा हिंस्रा संजाता ।

— किमर्थं पुनः आगतः ? गृहं नाशितम् । जीवन ने विफलीकृतम् । किमवशिष्टं पुनर्नाशयितुम् ? नय...... अद्य एनं मारय ...... ।

— किं नायं मे पुत्रः ? अनुशास्तुं मम अधिकारो नास्ति ...... ??

— पुत्र ...... ? अधिकारः ...... ? अनुशासनम् ??

किं वक्ति भवान् ? यस्य कर्तव्य ज्ञानं नास्ति सः पुनः अनुशासनम् शिक्षयेत् ?

—त्वमपि उद्धता संजाता ...... !

—अपसरतु ... । अपसरतु मत् पुरतः । नेच्छामि किमपि श्रोतुम् ... ।

—— माने ...... !!

— नहि ......। त्वरमपसरतु ।

— अहं ते पतिः । सश्च मे पुत्रः ...... ।

— नहि ... .. । अपसरतु भवान् ।

माना सवाष्पम् उच्चैः अक्रन्दत् । पुत्रं च दृढमालिङ्ग्य गृहं प्रविशत् । सरोषं सा द्वारं पिहितवती ।

मिलिन्दः बहु विचारितवान् । ततो घटनामुपशमयितुम् अयतत ।

—माने ...... ! माने ...... ! उन्मोचय ...... ! उन्मोचय ...... !

...... तर्हि ...... प्रत्यागच्छामि ...... ।

किमपि उत्तरं नागतम् । मिलिन्दः प्रत्यागच्छति । अन्तः श्रूयते मातापुत्रयोः विलापः । मिलिन्दः पश्चात् विवर्त्य अपश्यत् — तथापि द्वारं पिनद्धम् ...... ।

तदनु मानायाः स्थितिः दयनीया । पतिः विपथगामी । पुत्रः तदनुसारी । मूलतोऽयं वारणीयः । अन्यथा समग्रजीवने दुःखी भवेत् । किन्तु गुरुः कुत्र ? विद्यायनी कुत्र ? कस्मै वा पुत्रं समर्प्य सा निरुद्वेगा भविष्यति । पुत्रोऽयं भविष्यत् । नयनस्य ज्योतिः । जीवितुम् अधारः ।

सहसा एका प्रतिवेशिनी कलहरतं पुत्रमानीय उपस्थिता यथेच्छं सा मानाम् अभर्त्सयत् ।

— नय ते पुत्रम् । अहो ......, ईदृशोऽयं जारजः ? न कस्यापि वचनं शृणोति । यं कमपि बालं पश्यति तं ताडयत्येव । गृहाण एनम् । पश्य ......, यदि पुनः इत्थं भवेत् तर्हि अवस्था दारुणा स्यात् ।

माना उन्मादिनी संजाता । सा नेत्रं निमील्य पुत्रं ताड़ितवती । पुत्रस्य चित्कारे गृहं प्रकम्पितम् । प्रतिवेशिनी प्रस्थिता ।

पुत्रः उच्चैः विलपति । माना स्थिरा । कङ्कणं तस्याः पुत्ररक्तेषु रञ्जितम् । सहसा सद्योरुधिरं विलोक्य तस्याहृदयं विदीर्णम् ! आत्मनि असंयता सा उच्चैः विलप्य द्वारदेशे मस्तकं व्रणितवती । ततश्च पुत्रं दृढमालिङ्ग्य व्यलपत् । पुत्रो विस्मितः । नयनाग्रे तस्य केवलं मातुः रुधिरम् । उभयं उभयस्य देहे मिश्ररागं सन्तुल्य एकमयम् ।

त्रिकालस्य भाष्यतले उर्णनाभ एव चतुरः । सः केवलं जालमातनोति । नेत्रज्योतिषि च तमो भरति । अतः नियन्त्रणमपीह एका उपलब्धिः । शिलायां सन्तरणमपि सन्तोषः । अतलजलतटे प्रवलतृषा अपि जीवनस्य चुम्बनश्रीः ।

उज्ज्वलप्रत्यूषस्य अद्य विजयः ।

हस्तद्वयेन सञ्चितं द्रव्यं सहस्रहस्तेषु वितरितम् । अन्तःकरणस्य मन्तव्ये गन्तव्यं सत्यानुज्ञतम् । निरवतरणयात्रापथे न पुनरग्रे काञ्चित् फला फलयोः सूची । कर्मतर्पणमेव सेवा । आरब्धव्यम् ...... । समाप्तव्यम् ...... । उद्भवः स्वयं तु परिपार्श्वस्य संस्पर्श एव ।

पित्रोः सपिण्डीकरण समाप्तम्। प्रथमवार्षिकश्राद्धः सम्पन्नः। प्राचीनाकर्षणं किंचित् अद्य विरतम्। शेषाश्रु सतीर्थमभूत्। अन्तःकरणस्य मन्त्रेषु महासत्यं सरलायितम्।

उपस्थिता कर्मरञ्जिता साफल्यसंध्या!

सुदूरस्य मन्द्रमूर्च्छना तारतः तारान्तर संक्रमितम्। श्रेष्ठी नवोत्पल आसीनः। निकटे पत्नी कनिष्ठाकन्या इतिश्रीः च।

उद्धवः समागतः। सहर्षमञ्जलिं विधाय कृतज्ञोऽभूत्।

— भवन्निकटे चिरकृतज्ञोऽहम्। अद्य कर्म मे सम्पन्नम्। अतः श्रीमतां पुरतो मे अद्यप्रभृति अवसरनिमित्तं प्रार्थना।

— अद्य प्रस्थानम्?

— हँ, ह्यस्तनी पूर्णिमा अपसृता। अद्य तु प्रतिपद्। अनध्याय वासरः। अद्य अवसरो मे समीचीन इति मन्ये।

— भवतां प्राप्यं तु वर्तते।

— नहि। तद् गृहीतं यदावश्यकमासीत्। अधिकं नेष्यते। भवतां सहायो मे चिरस्मरणीयः।

उद्धवः प्रणतवान्। तमुद्धृत्य नवोत्पलः वाष्पगद्गदोऽभूत्।

— सत्यम् ......, भवान् सुबुधः ...... धन्यो ...... महान् ......।

— समष्टिषु विश्वस्तु परमाणुमात्रम्। ममाऽस्मिन् का वा स्थितिः? कुत्र वा महत्ताः .....?

इतिश्री· प्रणतवती अन्तिमवारम्।

— नमो नमः।

शेषप्रणामे तस्या विरहरहस्यम्। स्वरे प्रीतिपीयूषम्। नयने समर्पण तृष्णा। अधरे श्रीचुम्बनस्य विज्ञप्तिः। हृदये मनाक् आतुरता ...... अभावस्य किञ्चित् स्पर्शः ......।

उद्धवः प्रतिष्ठते।

देहदेहलीषु तस्य विरहमिलनयोः कति पुलकानि एव शिखायन्ते। प्रज्ञापथे 'सोऽहम्' — 'हंसयोः स एव प्राचीनकेलिविनिमयः ......। उभयो श्च पक्षविस्तारः ऊर्जस्वलः ......।

मित्रप्रत्यये श्रेष्ठी प्रसन्नः। इतिश्रीहृदये कियन्ति मधुरस्पन्दनानि उष्मतामाहरन्ति।

उद्धव मनसि स्मृतिरूपेण केलिमग्नाः पित्रोः कति निर्दिष्टभूमिकाः मातुश्च सा समधर्मिणी पुत्रवधूः। सहयात्रिणी सा यन्त्रणायां सह भोगिनी। आकर्षणार्थं सा विशोका। तस्यां च सुखानुशयी रागः, यस्य वाचकः केवल चित्तविक्षेपः। ततः रतिः ततः संशयः। ततो भ्रान्तिः। अनन्तरं जीवः कायकिङ्करः। अयं च अवश्यम्भावी मार्गः। मार्गोऽस्मिन् गमनमपि सम्पत्।

उद्धवस्य स्मरणे सा एव लघुकुटी। तदेव उपवनम्। मूर्च्छनायाम् आयुष्मान् मुकुन्दः। प्रलयं कामयमाना ...... माना ......।

अद्य तस्य निजस्वप्रभा क्षीणा। दुर्वलदेहो दुर्वहः। न स उदासीन न वा चञ्चलः। निजाङ्गे न जुगुप्सा। पराङ्गे न स्पृहा। निष्ठुरविमर्शे

तस्य केवलं सन्तोष: । यत् प्राप्त' तत् सत्यम् । यत् अप्राप्त' तदपि सत्यम् प्रथमस्वरूपस्य अन्त: सात् करणं वस्तुतः अनुभवः । अस्यैव अनुभवस्य कृते स: अनुस्वारयितुं श्रद्धावान् ।

अत्र यो यत् करोति तत् समीचीनमिति मनुते । यतः तस्मिन् कार्ये तस्मिन् मार्गे च स: अभ्यस्त: । तदेव तस्य रुचि: । अद्य यत् उद्धवास्य रोचते तदपि तस्य अभिरुचिः । अतः अन्यस्य रुचिः तन्निकटे विस्मयः । इह तु विस्मय एव अनुभूतिः । अद्भूतं च केवलो रसः ।

असहाय मुहूर्ते जनः अतीतमेव स्मरति । सुखं भवतु वा दुःखं भवतु तत्र निमज्ज .म् आश्वस्तिः । निमग्नवेलायाम् अय तु विशेषो यत् काचित् कल्पना मानसं प्रसादीकरोति विषादीकरोति अपि उद्धवस्य पुरोऽद्य सर्वं निदाघपीडितम् । सर्वत्र परुषरूपता । कालेऽस्मिन् अवश्यं तदुपवनं म्लान स्यात् । माना उदासीना स्यात् । प्रतीक्ष्य प्रतीक्ष्य मुकुन्द: नितरां विरक्त: स्यात् ।

तथापि विचित्र मनुभूयते । ...... माना पत्नी । उद्धवश्च जनकः । पुत्र: कश्चित् मातु: अनुकृतिरेव । किन्तु दुर्भिक्ष समय: । भोक्तुं वेला व्यतीयते तथापि किंचित् न मिलति । क्षुधा प्रवला । ज्वाला असह्या । अतः कायो विकृत: । परिवारस्य वचने केवलमभियोग: । सर्वत्र विकृतिः माना सदा अभियोगिनी ।

-- त्वं मे पाणिं गृहीतवान् । पुत्रोऽपि जातः । अत: आवयोः जीवनं [illegible] । दुर्भिक्षेऽस्मिन् समये आवयोः रक्षणं तवैव दायित्वम् ।

कर्त्तव्यमपि ...... । यदि कुत्रापि किञ्चित् न मिलति तर्हि ते मांसः रुधिरं च आवयोः भोजनं भविष्यति ।

उद्धवः केवलं पश्यति। पत्नी माना तमादाय अग्नौ निक्षेप्तुम् उद्यता । अग्नितः यथा सः निर्गन्तुं न शक्नुयात् तथा यतते पुत्रः । उद्धवो विचलः ।

— कुत्र ...... अहम् ...... ? कस्मिन् मार्गे ...... ? ?

उद्धवः चमत्कृतः । ततः सः प्रकृतिस्थः संजातः । कल्पना अपेता। दिवास्वप्नो विदीर्णः । पुरतः सत्यम् ...... महासत्यम् ...... किंचित् दुःखम् ...... किंचित् सुखम् ...... केवलसंसार नाटकम् ...... ।

अयं मार्गः पूर्वपरिचितः । अस्य पार्श्वे एको वृक्षः अद्यापि मानस मायाति । परमिह सः कुत्र ? मूलमात्रम् अवशिष्यते । पादपेऽस्मिन् मुकुन्द एकदा मूरलीं वादयन् आसीत् । वृक्षः छिन्नः । निदाघविकृत मूलं तु वैशाखश्रीः एव ।

भग्नकुटी नयनपथमागता । न पिता ...... न वा माता ...... अत्र अस्ति । केवलमिह आकर्षणस्य चिह्नम् — अन्न ग्रासयो ......, वसन भूषणयोः ......, यौवन सङ्गमयोः ......, सङ्गमसमरयोः ......, वीजविपिनयोः ......, चुम्बनाचमनयोः ......, साहस्थ्य प्रणवयो ......, अहंकार ब्रह्मज्ञानयोः ...... ।

प्राचीनस्य करुणाधारा अत्र विकृति कुवलये केशरस्य ग्राममिहरति । उद्धवचेतने इदानीं स्थावरः सार्वभौमः । जङ्गमो दासः ।

परित: कंसकृष्णयोः शवगन्ध एव कुब्जाया अङ्गवासे प्रतीक्षाप्रवणः।

पवनो झञ्झायते। स्वेदः रुधिरायते। तथापि शिलायितं देवकी हृदयं वहन् उद्धवः उपवनस्य भग्नांशं पश्यति।

— दशा इयं किमर्थम्? मुकुन्दः कुत्र? ...... माता क्व गता? युगपत् उभयस्य विरागः ...... ? ?

उद्धवस्य आगमने प्रतिवेशिनः समागताः। उपहासेषु तेषां समानुभवः केवलं प्राणलांछनः। ते सन्दिष्टवन्तः।

— माता पक्षिणीता। मुकुन्दः उपवनं विरुज्य कुत्र प्रयातः ...... न कोऽपि जानाति।

उद्धवः प्रतिवेशिनां मुखं निरीक्षमाणः। नितरां शिथिलः। अन्तःकरणे निजप्रश्नस्य उत्तरं झञ्झायते।

...... निज सौन्दर्यदृष्टिः निजकृते एव। एकस्य सौन्दर्यं नान्यः सहते। एकस्य अवनतिः अपरस्य समृद्धिसरणिः। एकस्य नाशः अपरस्य पुष्टिः। एकस्य हानिः अपरस्य संगुप्ततुष्टिः। एतदर्थं च जन आत्मीयः। आत्मीय एव रक्तपिपासुः।

उद्धवः मर्माहतः। .. .. आश्वस्तोऽपि।

— तैः सम्यक् कृतम्। प्रतीक्षा इह विच्युतिः।

मुकुन्दः योगभ्रष्टः। माता च संकल्पमन्थरा। न पुनरत्र स्नेहः स्नेहरूपेण प्रत्यावर्तिष्यते। इतः प्रभृति सुप्रस्थानं वरम्। दूरीभवनं च श्रेयसे। तथाकथितस्थावरेऽस्मिन् न पुनर्मोह उपयोगी।

ममता तु समरप्रणयिनी। ...... प्रतिवेशिनः ...... आत्मीयाश्च अधिकारिणो भवन्तु सुप्रस्थानस्य।

उद्धवस्य आचरणे तदनु उत्सर्गविधिः।

अन्तिमवारं सः कुटीं प्रविष्टः। अन्विष्यन् इव इतस्ततः समचरत्। सहसा निजपादुकाम् आविष्कृत्य सः चमत्कृतः। पादुकोपरि मानायाः कज्जलमञ्जूषा निहिता। पादुकातले च मुकुन्दस्य मुरली सयत्न स्थापिता। दृश्यमिदं मनोहरं खेदावहमपि। उद्धवः विस्मितः।

— ...... कस्य ...... इयं कृतिः ?? नूनं मुकुन्दस्य ......। वस्तुतो मुकुन्द एव चतुरः।

सर्वं विदितम्। सर्वं च प्रकाशे उपनीतम्। न पुनः आकर्षणं प्रभावशीलम्। अनुभवाय यदवशिष्यते तत् केवलमात्मनो विच्युतये ...। इतः प्रभृति तपसो मूल्यं न महत्। योगस्य च अभ्यासो न साधीयान्। समर्पणमेव, सर्वस्य समाधानम्। उत्सर्गश्च पन्थाः ......।

उद्धवः प्रस्थानोन्मुखः। निष्पाण्डुरस्तनचूडा इव पारिपार्श्विक स्मृतिसामग्री तदर्थं तु मसीकृष्णा।

अपराह्णम् अवनतम्।

उपस्थिता पर्याकुला माना। पुत्रसहायिनी सा आत्मनि विलोला ...... अतिशयम् उत्सुका ...... व्यग्रा ......।

उद्धवः स्तब्धः। चकितो विस्मितोऽपि। सम्मुखे तस्य द्वापरयुगीय कुब्जाया अपर संस्कारश्रीः ...... माना ......। कुटुम्बिनी सा

सुकार्यसुभद्रा । प्राणतः प्रेरणापुष्करिणी । परस्परपर्याप्तिनिमित्तं छन्दोमयी सा जीवनकिङ्किणिः । शिशुबीजनिमित्तं तथापि एका उर्वरा अरण्यानी ।

कातरबालकोऽयं सतृष्णः ।

मर्माहत उद्धवः कोपमापन्नः ।

— पुनः किमर्थम् ...... ? किमर्थं नरकं प्रति ... पुनरागमनम् ... ?

— स्नेहबद्धस्य कृते स्वर्गनरकयोः न किमपि पार्थक्यमस्ति । स्नेहबद्ध सेवकस्य प्रभोः पूजागृहपरिष्करणे यथा विनोदः तथा च शौचालय - परिष्करणे ।

— स्नेहबद्धः ...... ? वचनछलनया पुनस्ते स्पर्श कामना अवशिष्यते ?

— उद्धव ...... ! अहं तु दग्धा । पुनः दहनकामनया नात्र आगता

— तर्हि ...... ?

— मन्ये , श्रुता मे दशा ।

— सर्वं श्रुतम् ।

— पुनः श्रोतुं कामयसे ...... ? तर्हि ......

— नहि ...... । विरम्यताम् ...... ।

— अनुरोध एको मे वर्तते !

— मन्निकटे ...... ? मन्निकटे अनुरोधः ...... ? योनिस्वः ...... , भार्गस्य पादपच्छाया च यस्य आश्रयः ...... , तन्निकटे अनुरोधः ... ? तन्निकटे भिक्षा ...... ? ?

— परिस्थितिः परिवर्तिता अद्य । कालो विगलित: । तथापि त्वयि मे विश्वासः अक्षुण्णः ।

— विश्वासः ...... ? कोऽयं विश्वासः ?

— गृहं मे नष्टम् । तत् सुपथमानेतुं तव सहायं कामये । विश्वासवशात अद्यापि अहं ते प्रतीक्षायाम् ...... ।

— ...... प्रतीक्षा अत्र विच्युति: । किमहं करवाणि...... ? नहि ..., माने ...... ! निवर्तस्व । किमपि कर्तुं न शक्यते ।

— जाने ... , निवर्तनाय अहमत्र आगता । पुनश्च जाने , नष्टगृहस्य मे उत्तरदायित्वं ममैव । परं नजाने ' किमर्थम् ...... , केन प्रकारेण वा अहमत्र आगतवती ।

— इह आगम्य त्रुटितम् । अहं तु अधुनैव . ... स्थानमिदं परित्यक्तुं संङ्कल्पबद्धः ।

— किमर्थम् ...... ?

— किं वा आकर्षणं पुनः विद्यते अत्र प्रसादयितुं मन: ? ...... त्वं निवर्तस्व । न मे संकल्पः अन्यथा भविष्यति ।

— न मे विश्वासोऽपि अन्यथा भवतु ।

— मामिह प्रतिरोद्धुं कस्ते अधिकारो विश्वासछलेन ? का त्वम् ... ? का त्वम् ...... इत्थं वक्तुम् ?

— सत्यम् । को वा अधिकारो मे वर्तते ?

— नाऽहं किमपि श्रोतुमिच्छामि । अनुरोधो मयि व्यर्थः । निवर्तस्व त्वम् ...... ।

—सत्यम् ... , वस्तुतो येषामधिकारः ते तु दिवंगताः । अपरः को वा अधिकारायक्षमः ? तथापि ...... , तव दुःखेन अहं दुःखिनी ...... , उद्धवः ... !

उद्धवो विपरीतदिशं निरीक्षमाणः । तं च सम्बोधयन्त्यन्ती माना तस्य पादतले म्लानकुवलयस्य शेषकेशरमिव अश्रुलप्रणतिं समर्पयितुं केवलं भावप्रवणा । भीतिकातरो बालकः नीरवः । शोकाकुला माना आत्मनि असंयता ।

— उद्धव ...... ! नूनं निवर्तिष्ये । परम् ...... , परं पुत्रो मे अद्य प्रभृति तव शिष्यः । तस्य शिक्षा त्वयि न्यस्ता । अयं मे अनुरोधः ... अभिलाषः ...... समर्पणमपि ।

माना उद्धवस्य चरणं धृत्वा शिशुरिव व्यलपत् । उद्धव आवेगशीलः । प्रथमवारं तस्य नेत्रद्वयं सजलमभूत् । तथापि निर्वाक् ...... निरुत्तरः ...... निराहततरुरिव ...... स्थिरः ...... ।

आहता हरिणीव माना प्रतिष्ठते । प्रतिष्ठते सा ...... नष्टनीडस्य मुक्तये ...... । पत्युः सद्गतये ...... । पुत्रस्य प्रगतये .. ... । आत्मनः शान्तये ...... । उद्धवस्य विभूतये ... .. ।

उद्धवः मानाया मार्ग पश्यति । मनसि नृत्यति , कर्णकुहरे च प्रतिध्वन्यते मानाया अन्तिमवैखरी । इतः उपवने पुत्रः स्थाणुः । मानाया अञ्चलरङ्गे सन्ध्यारागो विकीर्णः ।
वक्रमार्गस्य पादपान्तराले सा अन्तर्हिता ! सहसा पुत्रः उच्चैरक्रन्दत् ।

उद्धवः प्रकृतिस्थः संजातः। सोद्वेगं स बालकं समालिङ्गत, पुत्रः! इति सम्बोध्य। पुत्रः तथापि क्रन्दनरतः। उद्धवः किमपि चिन्तयन् आकाशमपश्यत्। आकाशे प्रातिपदिकी रङ्गच्छटा तथापि नवीना।
— का वा अस्मै शिक्षा प्रदेया ? विद्या वा अविद्या ...... वा ...... ?
अद्य तिथिः प्रतिपद्। अतः अविद्या एव अद्य प्रभृति अस्य पाठो भवतु।

चिन्ताजड उद्धवः मनसि केवलमनुरणयति —— "प्रतिपद् पाठनाशिनी ......।"

तथापि पुत्रो विलपति। उद्धवः बोधयति।
— पश्य ......, पश्यपुत्र ......! किं पश्यसि। इदम् उपवनम्, इयं कुटी। अयं विशाल पादपः। इदं शस्यक्षेत्रम्। एतत्सर्वं सम्पत्तिः। त्वम् ...... त्वं सर्वस्य प्रभुः ......।

— अहम् ...... ? अहम् .. ... ? ?

— नूनम् ......। सर्वं तव एव ......।

— मम ... .. ? मम ...... ? ...... अहम् ...... मम ...... अहम् ... ... मम। अहम् ...... अहम् ...... मम ...... मम ......।

बालको नृत्यति। अहम् - मम – शब्देषु उपवनं केलिविह्वलम्। परितः प्रतिपदः अरुणिमा। पश्चिमदिशं पश्यन् उद्धवः संध्यारागे तल्लीनः।

अखण्डप्रणवस्य सहस्रधारा साहस्थ्यप्रवाहे स्वाहाशालिनी ...।

॥ समाप्तम् ॥

# लेखकस्य अन्यकृतयः

प्रकाशिताः , प्रकाशन प्रतीक्षायां च —

| | | | |
|---|---|---|---|
| १ प्रणय प्रदीपम् | (काव्यम्) | सुधर्मायां | प्रकाशितम् |
| २- हृदयेश्वरी | (कविताचयम्) | ,, | ,, |
| ३- महातीर्थम् | ,, | ,, | ,, |
| ४- भिन्नपुलिनम् | भारतस्य विभिन्न पत्रिकासु | | ,, |
| ५- अलका | ,, | ,, | ,, |
| ६- निम्नपृथिवी | (लघुकथागुच्छम्) | ,, | ,, |
| ७- दिशाविदिशा | ,, | ,, | ,, |
| ८- तिलोत्तमा | (उपन्यासः) | सुमर्धायां | प्रकाशितः |
| ९- मधुयानम् | ,, | ,, | ,, |
| १०- आवर्तम् | ,, | — | — |
| ११- शीतलतृष्णा | ,, | प्रकाशितः (लोकभाषा प्रचार समितिः , पुरी ,) | |
| १२- पताका | (बालोपन्यासः) | — | — |
| १३- निकषा | (उपन्यासः) | — | — |
| १४- अरुणा | ,, | — | — |

———



**केशवचन्द्र दाशस्य**

प्रसन्नगम्भीरा भाषाशैली अनुपमवर्णनाचातुरी च नितरामुपभोग्या ।

—सुधर्मा,
मैसूर् ।

कवेः **दाशस्य** नवीना कथाशैली, घटनानामायोजनं, चिन्तनप्रेरकविषय विश्लेषण चमत्कारः, समग्र जीवन दर्शनं, विशिष्य संकल्पेन सह क्रियाशीलत्वं च आधुनिक संस्कृत रचना प्रपञ्चे कवेः विशिष्टस्थानं कल्पयन्ति ।

—भारतमुद्रा
केरलम् ।

सरल लघुआख्यानि, सूक्तियोजना, ... विशेषता **अस्य** रचनाया आकर्षणं वर्धयन्ति ...